हते तस्मिन्महाभागे शरतल्पगते तदा ।
त्वयोक्ते पुरुषव्याघ्र द्रोणो ह्यासीत्पुरःसरः ॥ २४
तेनापि रक्षिताः पार्थाः शिष्यत्वादिह संयुगे ।
स चापि निहतो वृद्धो धृष्टद्युम्नेन सत्वरम् ॥ २५
निहताभ्यां प्रधानाभ्यां ताभ्याममितविक्रम ।
त्वत्समं समरे योधं नान्यं पश्यामि चिन्तयन् ॥२६
भवानेव तु नः शक्तो विजयाय न संशयः ।
पूर्वं मध्ये च पश्चाच्च तवैव विदितं हि तत् ॥ २७
स भवान्धुर्यवत्संख्ये धुरमुद्वोढुमर्हसि ।
अभिषेचय सेनान्ये स्वयमात्मानमात्मना ॥ २८
देवतानां यथा स्कन्दः सेनानीः प्रभुरव्ययः ।
तथा भवानिमां सेनां धार्तराष्ट्रीं बिभर्तु मे ।
जहि शत्रुगणान्सर्वान्महेन्द्र इव दानवान् ॥ २९
अवस्थितं रणे ज्ञात्वा पाण्डवास्त्वां महारथम् ।
द्रविष्यन्ति सपाञ्चाला विष्णुं दृष्ट्वेव दानवाः ।
तस्मात्त्वं पुरुषव्याघ्र प्रकर्षेथा महाचमूम् ॥ ३०
भवत्यवस्थिते यत्ते पाण्डवा गतचेतसः ।
भविष्यन्ति सहामात्याः पाञ्चालैः सृञ्जयैः सह ॥३१ C. 8. 379 B. 8. 10. 38 K. 8. 7. 39

24 [a]) V1 B (except B1) Da1 D1.3–5.7 S महेष्वासे (Da1 °स). — [b]) Ś1 V1 B D तथा; S पुनः (for तदा). — [c]) For the event, cf. B. 7. 5. 17. V1 B1 त्वयोक्तं; S त्वयोक्तः (for त्वयोक्ते). B4 पुरुषव्याघ्रे; Dn1 पुरुषः व्याघ्र; T2.3 G M1 पुरुषव्याघ्रो. — [d]) D1 द्रोण (for द्रोणो). In Ś2, the portion from ह्या up to सरः is lost on a damaged fol. V1 D2.6 [S]प्यासीत्; Cc [S]स्यासीत् (for ह्यासीत्). D5 द्रोणे ह्योह्यासीपुरस्सारः (sic); G2 ह्यासीद्द्रोणपुरस्सरः.

25 [a]) D8 रक्षितः पार्थः (for रक्षिताः पार्थाः). — [b]) Ś2 इव संयुगे; B (except B1) Da1 D1.3–5.7 इति मे मतिः. — [c]) G2.3 तथापि (for स चापि). K4 D2.6.7 T2 G2.3 युद्धे (for वृद्धो). — [d]) B1.3 M2–4 संयुगे; D2 T1.3 M1 सत्वरः; G2 सत्वतः (for सत्वरम्).

26 In Ś2, the portion from st. 26 up to 30 is mostly lost on a damaged fol. The variants are noted wherever legible. — [a]) V1 B1 D2.6 प्रवीराभ्यां (for प्रधानाभ्यां). — [b]) K1.4 B4 D8 (before corr.) अमितविक्रमः; K3 B1 D6 °विक्रमं; T1 G2.3 M1 अतुलविक्रमः; T2.3 G1 अतुलविक्रमं; M2–4 अतुलविक्रम (for अमितविक्रम). — [c]) B1 तत्समं (for त्वत्समं). T2 योद्धुं; M3.4 यौधं (for योधं). — [d]) Ś2 चिंतयत्; D4 चिंतय (for चिन्तयन्).

27 [a]) B3.5 Da1 D1.5 भवानेवाद्य (for भवानेव तु). T3 G च (for तु). — [c]) K1 पूर्वं मध्यं च; K3.4 पूर्वमध्ये च; D2 युद्धमध्ये च; T2.3 G M1 पूर्वं मध्ये तु. D2.6 पांचाली (for पश्चाच्च). — [d]) Ś2 तव वै; K2 V1 B D (except Dn1) T1.2 M तथैव (T1 °वं) (for तवैव). K2.3 V1 B (except B3) D (except Dn1) T1 M विहितं (for विदितं). K3 V1 B3–5 Dn1 D2–8 T1.2 M हितं; B1 हतं; Da1 D1 हि ते (for हि तत्). T3 G विहितं च स्वकं हितं.

28 [a]) K4 धुर्जवत्; Dn1 D2 सूर्यवत् (for धुर्यवत्). G2 M संख्ये. — [b]) D2 धुराम्. K1 B D (except Dn1) S (except T2) अर्हति (for अर्हसि). — [c]) Ś1 K2 D1.2.4.5 सैनान्ये; D6 Ccp राधेय; Ca.c सेनान्ये (as in text).

29 [b]) Ś2 V1 Dn1 D2.3.8 G1.2 M1 सेनानी°; T1 सेनानिः; T2 सेनानि. — [c]) K4 इमा शेना (for इमां सेनां). — [d]) K1 धातुराष्ट्रीं; K3 D4 धार्तराष्ट्रां; D5 धार्तराष्ट्रा. G2 बिभष्व; G3 बिभर्ति; Ca बिभर्तु (as in text). B (except B1) Da1 D1.3.4.7.8 S वै (for मे). — [e]) D3 शत्रुगणान् (for शत्रुगणान्). K4 संख्ये (for सर्वान्). — [f]) B (except B1) Da1 Dn1 D1.3–5.7.8 S transp. इव and दानवान्.

30 [a]) K4 अवस्थिरं; Dn1 अवस्थित- (for अवस्थितं). Ś1 K2 V1 B D (except D8) T2 दृष्ट्वा (for ज्ञात्वा). — [b]) K1 त्वा (for त्वां). Ś1 K4 V1 B D S महारथाः (K4 °था) (for महारथम्). — D1 T1 om. 30[c]–31[b]. — [c]) K3 D4.7 च (for स-). K1 श्रावयिष्यंति पांचाला; B3 भविष्यंति निरुत्साहा; T3 G विद्रविष्यंति पांचाला. — [d]) K1 T2.3 दृष्ट्वैव. K4 दानवा. — [e]) T2 अस्माकं (for तस्मात्त्वं). — [f]) K1 प्रकर्षेस्त्वं; K3 B1.2.4.5 Da1 D2–7 प्रकर्षेतां; V1 प्रकर्षेतां; B3 प्रहृष्येतां; D8 प्रकर्षेमां; G1.2 प्रहर्षेथा; M1 प्रकर्षथा; Cc प्रकर्षेथा (as in text). M4 महाचमूः.

31 D1 T1 om. 31[ab] (cf. v. l. 30). — [a]) K4 भवति वस्थिते; B3 भवनवस्थिते (sic) (for भवत्यवस्थिते). T2 ह्येते (for यत्ते). — [b]) K1.3 V1 B Da1 Dn1 D2–7 T2.3 G1.2 M मंदचेतसः; G3 मंदतेजसः (for गतचेतसः). D8 पांडवानामचेतसः. — [c]) V1 B Da1 Dn1 D2–7 T1 द्रविष्यंति; D1 अद्रिष्यंति (for भविष्यन्ति). K1 महामत्याः; Dn1 G2 महामात्याः (for सहामात्याः). — [d]) Ś1 K1.3 B3 Da1 Dn1 D1.5.8 पांचालाः (for पाञ्चालैः).

C. 8. 380
B. 8. 10. 37
K. 8. 7. 40

यथा ह्यभ्युदितः सूर्यः प्रतपन्स्वेन तेजसा ।
व्यपोहति तमस्तीव्रं तथा शत्रून्व्यपोह नः ॥ ३२

कर्ण उवाच ।

उक्तमेतन्मया पूर्वं गान्धारे तव संनिधौ ।
जेष्यामि पाण्डवान्राजन्सपुत्रान्सजनार्दनान् ॥ ३३
सेनापतिर्भविष्यामि तवाहं नात्र संशयः ।
स्थिरो भव महाराज जितान्विद्धि च पाण्डवान् ॥ ३४

संजय उवाच ।

एवमुक्तो महातेजास्ततो दुर्योधनो नृपः ।
उत्तस्थौ राजभिः सार्धं देवैरिव शतक्रतुः ।
सेनापत्येन सत्कर्तुं कर्णं स्कन्दमिवामराः ॥ ३५
ततोऽभिषिषिचुस्तूर्णं विधिदृष्टेन कर्मणा ।
दुर्योधनमुखा राजन्राजानो विजयैषिणः ।
शातकौम्भमयैः कुम्भैर्माहेयैश्चाभिमन्त्रितैः ॥ ३६

---

V1 D2 पांचालाश्च ससृंजयाः (D2 °या); B1 D6 सपांचालाः ससृंजयाः; B2.4.5 D3.4.7 पांचालाः सृंजयाश्च ह (B5 हि); S पांचालाश्च सकेकयाः.

32 a) K4 सूर्यं (for सूर्यः). — b) K1 प्रतापां; K4 V1 प्रपतन्; D4.6 प्रतपत् (for प्रतपन्). — c) G2 व्यपोहत्तिमिरं तीव्रं. Ca cites व्यपोहयति; Cc व्यपोहति (as in text). — d) V1 D6 शत्रुं (for शत्रून्). K3 व्यपोहति; V1 B1 D2.6.8 T G1.3 M2–4 व्यपोहय; B3–5 Da1 D1.3–5.7 प्रतापय; Dn1 व्यपोह मे; G2 व्यपेतयः (sic); M1 विनाशयः (for व्यपोह नः). — After 32, Ś K V1 B Da1 D1–8 (D2 om. line 3) ins.:

69* संजय उवाच ।
आशा बलवती राजन्पुत्रस्य तव याभवत् ।
हते भीष्मे च द्रोणे च कर्णो जेष्यति पाण्डवान् ।
तामाशां हृदये कृत्वा कर्णमेवं तदाब्रवीत् ।
सूतपुत्र न ते पार्थः स्थित्वाग्रे संयुयुत्सति ।

[K4 कर्ण उवाच. — (L. 1) D3.4.7 साभवत् (for याभवत्). Ś K V1 B1 D2.6.8 पुत्राणां तेभवत्तदा; B2 पुत्राणामभवत्तदा; B3 तव पुत्रस्य याभवत् (for the post. half). — (L. 2) Ś K B1.5 हते भीष्मे तथा (B1.5 हते) द्रोणे; V1 D2.6.8 हते द्रोणे तथा (V1 हते) भीष्मे; B3 हते च भीष्मे द्रोणे च (for the prior half). D5 कर्णे (for कर्णो). K1 जप्येति; K3 जयति (for जेष्यति). — (L. 3) Om. in D2. K3 एव (for एवं). — (L. 4) K3 गते (for न ते). D2 सूतपुत्रे हते पार्थे; D6 सूतपुत्रो हि ते पुत्रं (for the prior half). D1 स्थिताग्रे; D4 (m as above) कृत्वाग्रे. V1 D3.4.8 स (for सं-). Ś K1.2 स्थित्वाग्रे न (Ś1 K2 °ग्रेण) युयुत्सति; K3 D2.6 Ca प(D6 पु)राक्षस्य युयुत्स(K3 °त्स्य)ति (for the posterior half).]

On the other hand, Dn1 S ins. after 32:

70* संजय उवाच ।
एवमुक्तस्तु राधेयो राज्ञा दुर्योधनेन ह ।
राज्ञां मध्ये महाबाहुः प्रीतात्मा स महाबलः ।
हर्षयन्नब्रवीत्कर्णो दुर्योधनमिदं वचः ।

[G2 om. the ref. — (L. 1) Dn1 हि; T1.2 G2.3 M च (for ह). — (L. 2) Dn1 महारथाः (for महाबलः).]

33 Dn1 S om. the ref. — a) K3 उक्तमे च मया (sic); G2 उक्तमेव त्वया (for उक्तमेतन्मया). — c) D2 येष्यामि (for जेष्यामि). B Da1 Dn1 D1–5.7 G2 सर्वान् (for राजन्). — d) D8 सगणान् (for सपुत्रान्). D2 सहपांडवान् (for सजनार्दनान्).

34 b) K1 तथाहं (for तवाहं). — d) K1 जित्वान् (for जितान्). D1 om. च. D8 T2 विजितान्विद्धि पांडवान्. — After 34, K4 ins.:

71* समं ज्वरद्रो[जरद्रो]णमहं महाहवे
ब्रवीमि सर्वे कुरवो निबोधत ।
न वा मदन्यः प्रसहेद्रणेऽर्जुनं
क्रमागतं मृत्युमिवोत्तमामृतात् ।

35 Ś K1–3 T1.2 M om. the ref. — a) Ś K4 B (except B1) Da1 D1–7 महाराज; K1 महाराजस्; K2 मधूराज (for महातेजास्). — b) T3 तदा; G3 तथा (for ततो). T3 नृप. B5 राजा दुर्योधनस्ततः. — d) Dn1 दैवैरिव. — e) B (except B1) Da1 D3–5.7 सैनापत्येन; D2 शेनापत्येन (for सेनापत्येन). K3 साकर्तुं; T3 G1.2 तं कर्तुं (for सत्कर्तुं). — f) K3 कर्णे (for कर्णं). K1 स्कंधम् (for स्कन्दम्).

36 a) Dn1 [ऽ]भिषिचः; T2 [ऽ]भिसिषिचुः (for ऽभिषिषिचुस्). K1.3 V1 B Da1 Dn1 D1–5.7.8 S कर्णं (for तूर्णं). D6 ततोभिषिंचुः कर्णं ते. — c) B3 सुयोधन° (for दुर्योधन°). Ś2 दुर्योधन महाराजन्. — d) D5 °षिणा; D8 (m as in text) विषयैषिणः; G2 विजिगीषवः; G3 विजिगीषिणः (for विजयैषिणः). — e) K3 शतैकौंभमयैः; V1 B D (except Dn1) S (except M2) Ca शातकुंभ° (for शातकौम्भ°). — f) V1 B3–5 D3.5.7 मंत्रैश्चैवाभि(V1 °नु)मंत्रितैः; B1 माहेयैरभि°; B2 महोजैश्चाभि°; Da1 महेयैश्चाभि°; Dn1 राजतैश्चाभि°; D1 महायैश्चाभि°; D6 महाहैश्चाभि°; D8 मृन्मयैश्चाभि°; T1.3 G2.3 ब्राह्मणैश्चाभि°; T2 ब्रह्मणैश्चाभि°; G1 ब्राह्मणैरभि°; M1 (*sup. lin.* as in text) माहेयैश्चापि मंत्रितैः. Cc cites मंत्रैः.

तोयपूर्णैर्विषाणैश्च द्वीपिखड्गमहर्षभैः ।
मणिमुक्तामयैश्चान्यैः पुण्यगन्धैस्तथौषधैः ॥ ३७
औदुम्बरे समासीनमासने क्षौमसंवृतम् ।
शास्त्रदृष्टेन विधिना संभारैश्च सुसंभृतैः ॥ ३८
जय पार्थान्सगोविन्दान्सानुगांस्त्वं महाहवे ।
इति तं बन्दिनः प्राहुर्द्विजाश्च भरतर्षभ ॥ ३९
जहि पार्थान्सपाञ्चालान्राधेय विजयाय नः ।
उद्यन्निव सदा भानुस्तमांस्युग्रैर्गभस्तिभिः ॥ ४०
न ह्यलं त्वद्विसृष्टानां शराणां ते सकेशवाः ।
कृतघ्नाः सूर्यरश्मीनां ज्वलतामिव दर्शने ॥ ४१

C. 8. 394
B. 8. 10. 51
K. 8. 7. 56

37 [a]) K3 B1.3.4 Da1 D3.4.7 तोयपूर्णविषाणैश्च. — [b]) Ś1 K2 द्वीपिखाड्गमहर्षभैः; K1.4 द्वेषखाड्ग(K4 द्वीपखड्ग)महर्षिभिः; K3 M3 द्वैपखड्गमहाप्रभैः (M3 °र्षभैः); V1 द्विपषड्गिमहर्षभैः; B1 द्वैपखशौण्डहर्षिभिः (sic); B3-5 Dn1 D2-4.6-8 G2.3 Cc द्विपखड्गमहर्षभैः; Da1 D1.5 द्वैपथाड्ग° (Da1 °द्व°); T2 **खड्ग°; T3 M2.4 द्वैपखा-(T3 °ख)ड्ग°; G1 द्वेपखड्ग°; M1 द्वीपखाड्ग°. Ca cites द्वैपं, खड्गं and महर्षभं. — [c]) K3 वन्यैः; V1 B2 M2-4 धान्यैः (for चान्यैः). B1.3-5 Da1 D1.3-5.7 G2 मणिमुक्तायुतैश्चान्यैः; Dn1 °मुक्ताफलैर्धान्यैः; D2 °मुक्ताधरैर्धान्यैः; D6 °मुक्तासनैर्धान्यैः; D8 G1.3 M1 °मुक्तायुतैर्धा(D8 °र्ध)न्यैः; T1.3 °मुक्तायुधैर्धान्यैः; T2 °मुक्ताधनैर्धान्यैः. — [d]) V1 पुण्यैर्गंधैस्; D6 पुष्पगंधैस् (for पुण्यगन्धैस्). Dn1 D1 तथोषधैः; T1 G2 महौषधैः (for तथौषधैः).

38 [a]) K3 अहंचर- (sic); B4 औडुबरे; D1.5 ऊदुंबरे; D4 औदुंबरैः; D8 औदंबरे (for औदुम्बरे). Ca cites औदुंबरः; Cc °रं. Ś1 K2.3 V1 B D (except Dn1) सुखासीनम्; T2 (*also* as in text) तदासीनम् (for समासीनम्). K1 ओदुंबरेण समासीनम् (hypermetric). — [b]) D8 आतते (for आसने). K1 क्षौसमंवृतं (sic); K3.4 B D5 क्षौमसंवृते; V1 damaged (for क्षौमसंवृतम्). — [d]) K3 ससंभ्रतैः; B1 Dn1 सुसंवृतैः (for सुसंभृतैः). D2.6 संभारैश्चापि संवृतैः. — After 38, N T G ins.:

72* ब्राह्मणाः क्षत्रिया वैश्यास्तथा शूद्राश्च संमताः ।
तुष्टुवुस्तं महात्मानमभिषिक्तं वरासने ।
ततोऽभिषिक्तो राजेन्द्र निष्कैर्गोभिर्धनेन च ।
वाचयामास विप्राङ्यांन्राधेयः परवीरहा ।

[(L. 1) K1 ब्रह्मणाः; K4 D1 T2 G2 ब्राह्मणा (T2 °ण-). K3 D5 संमता (D5 °तः); V1 B2 D2.6 संगताः; D8 वैष्णवाः (for संमताः). — (L. 2) D5 अपिषिक्तं (for अभिषिक्तं). Ś K2.4 महासने (for वरासने). — (L. 3) V1 [s]मिषिक्ते; Dn1 °षिक्तौ; T3 G2.3 °षिक्त (for °षिक्तो). Ś K1.2.4 D8 T2 transp. निष्कैः and गोभिः. B1 निस्कैर्; Da1 निष्वैर्. Ca.c cite निष्कैः and Cc धनेन (as above). — After line 3, T1 ins.:

73* पूजयामास वस्त्रैश्च विप्रान्वेदविदस्ततः ।

— (L. 4) G2.3 यो(G3 या)जयामास; Ca वाचयामास (as above). T G2.3 विप्रैश्च; G1 विप्रांश्च (for विप्राङ्यान्). D5 रागाधेयः (sic). K1 पुनवीरहा (for परवीरहा). T G1.3 ऋग्भिः (T1 वाग्भिः; T2 ऋत्विक्-) स्तोत्रैः समंततः; G2 ऋत्विग्भिस्तोमैस्तथा (for the post. half).]

T (T2 om. line 2) G cont.: M ins. after 38:

74* स व्यरोचत राधेयः सूतमागधबन्दिभिः ।
स्तूयमानो यथा भानुरुदये ब्रह्मवादिभिः ।
ततः पुण्याहघोषेण वादित्रनिनदेन च ।
जयशब्देन शूराणां तुमुलः सर्वतोऽभवत् ।
जयेत्यूचुर्नृपाः सर्वे राधेयं तत्र संगताः ।

[(L. 1) T1 त्वरोचत. T1.3 G1.2 °वंदिभिः. — (L. 2) T1 स्तूयमानोदयो भानोर्. — (L. 4) T1 तुमुलं.]

39 [b]) B Da1 D1.3-5.7.8 सानुगांस्तान्; Dn1 सानुगस्त्वं; S सानुबंधान् (for सानुगांस्त्वं). Ś K2.4 महारणे; V1 D2.6 विशां पते; B5 D3.4.7 महामृधे (for महाहवे). — [c]) B3.5 Da1 D1.5 इति ते; M1 इतीदं (for इति तं). T1 G1.2 वंदिनः; T3 मंत्रिणः; M1 वंदिनं (for बन्दिनः). — [d]) T1 द्विजश्च (for द्विजाश्च). K1 D5 G3 पुरुषर्षभ; K3 B1 पुरुषर्षभाः; V1 B2-5 Da1 Dn1 D1-4.6.7 पुरुषर्षभं; M3 भरतर्षभं (for भरतर्षभ).

40 [a]) T G1.2 M2-4 जय; M1 जयत् (for जहि). D3 सपांश्चालान् (for सपाञ्चालान्). — G2 om. (hapl.) 40[b]-42[a]. — [b]) K1 राधये; D4 राधेयः. K3 D3 च; Ca नः (as in text). — [c]) K1 उद्यर्निव; T1 उद्यन्नेव. K3 B3 महा-; T1 M यथा (for सदा). T2.3 G1.3 यथादित्यस् (for सदा भानुस्). T1 M सूर्यस् (for भानुस्). — [d]) K1 तमांस्यग्रैर्*स्तिभिः (sic).

41 G2 om. 41 (cf. v. l. 40). — [b]) B2.4.5 D3.4.7 वै (for ते). K3 D4 M1 सकेशवः; K4 सकेशवा (for सकेशवाः). — In G1, the portion from 41[c] of this adhy. up to st. 30 of the next adhy. is lost on a missing fol. — [c]) K3 कृतघ्नः; Dn1 ऊल्का; D7.8 उल्काः; Ca कृतघ्नाः (as in text). — [d]) Da1 ज्वलतमिव; G3 चलतामिव (for ज्वलतामिव). D6 वंशनि (for दर्शने).

C. 8. 395
B. 8. 10. 52
K. 8. 7. 57

न हि पार्थाः सपाञ्चालाः स्थातुं शक्तास्तवाग्रतः ।
आत्तशस्त्रस्य समरे महेन्द्रस्येव दानवाः ॥ ४२
अभिषिक्तस्तु राधेयः प्रभया सोऽमितप्रभः ।
व्यत्यरिच्यत रूपेण दिवाकर इवापरः ॥ ४३
सेनापत्येन राधेयमभिषिच्य सुतस्तव ।
अमन्यत तदात्मानं कृतार्थं कालचोदितः ॥ ४४
कर्णोऽपि राजन्संप्राप्य सेनापत्यमरिंदमः ।
योगमाज्ञापयामास सूर्यस्योदयनं प्रति ॥ ४५
तव पुत्रैर्वृतः कर्णः शुशुभे तत्र भारत ।
देवैरिव यथा स्कन्दः संग्रामे तारकामये ॥ ४६

इति श्रीमहाभारते कर्णपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

---

42 G1 missing (cf. v. l. 41). G2 om. 42$^{a}$ (cf. v. l. 40). — $^{a}$) B (except B1) Da1 D3–5.7 T G3 M1–3 च (for हि). T1 शक्ताः (for पार्थाः). — $^{b}$) T1.3 G2.3 M transp. स्थातुं and शक्ताः. — $^{c}$) S (G1 missing) आत्तवज्रस्य (for आत्तशस्त्रस्य). — $^{d}$) T1 महेंद्रस्यैव (for महेन्द्रस्येव). — After 42, S (G1 missing) ins.:

75*　　　　संजय उवाच ।
　　स सत्कृतः स्तूयमानः सुहृद्गणवृतो वृषा ।
　　कर्णो दुर्योधनं वाक्यमब्रवीत्प्रहसन्प्रियम् ।
　　दुर्योधनाद्य सगणं पाण्डूनां प्रवरैः सह ।
　　फल्गुनं सूदयिष्यामि त्वत्प्रियार्थं सबान्धवम् ।
　　सपर्वतार्णवद्वीपां शाधि गां गतपाण्डवाम् ।　　[5]
　　पुत्रपौत्रप्रपौत्रेषु प्रतिष्ठां गमयिष्यसि ।
　　नासह्यं विद्यते मह्यं त्वत्प्रियार्थमरिंदम ।
　　सत्यधर्मानुरक्तस्य सिद्धिरात्मवतो यथा ।

[(L. 1) T1 नृप; G3 रुपा (for वृषा). — (L. 4) G2 योधयिष्यामि. G2 सबांधवः. — (L. 5) T1 °द्वीपां शाधि मां हतपाण्डवां; G2 °द्वीपानां शाधि तान्गणपांडवाः (sic). — (L. 6) G3 प्रतिष्ठां च गमिष्यसि (for the post. half). — (L. 7) T1.2 M3.4 परंतप (for अरिंदम).]

43 G1 missing (cf. v. l. 41). D2 om. 43. Before 43, T M ins. संजय उवाच. — $^{a}$) D4 reads from राधेयः up to इवापरः (in $^{d}$) on marg. (*sec. m.*). Dn1 तदा कर्णः; D6 स राधेयः. — $^{b}$) T2 तदानीं नितरां बभौ. — $^{c}$) Ś2 K4 D8 T2 व्यतिरिच्यत; K1 वन्यरिदय (sic); V1 B Da1 Dn1 D1.3.5.7 अत्यरिच्यत; D4 अत्यशोभत; T1 व्यत्यरुच्यत; T3 G2 प्रत्यरिच्यत (for व्यत्यरिच्यत). — $^{d}$) Ś2 इवापराः (for इवापरः).

44 G1 missing (cf. v. l. 41). — $^{a}$) M4 om. (hapl.) the portion from न up to पत्य (in 45$^{b}$). K1 सैनापभ्य (sic); K3 V1 D1.2.6.8 T G3 सेनापत्ये तु; B Da1 D3.5.7 सैनापत्ये तु; D4 (marg.) सैन्यपत्ये तु; G2 सेनापत्ये नु (for सेनापत्येन). — $^{b}$) K1 अभिषिच्य; D4 अभिषिंच्य; D5 अभिषूच्य (for अभिषिच्य). — $^{c}$) G2 अमन्यंत (for अमन्यत). K3 स चात्मानं; T1 तथात्मानं; T2 महात्मानं; G2.3 इवात्मानं (for तदात्मानं). — $^{d}$) K1.3 Dn1 D8 कालमोहितः; Da1 °वोदितः; D2 °नोदितः (for °चोदितः).

45 G1 missing (cf. v. l. 41). M4 om. up to पत्य (in 45$^{b}$) (cf. v. l. 44). — $^{a}$) T1 राज्ञा; T3 G2.3 M (M4 om.) राज्ञः (for राजन्). K3 संप्राप्तः (for संप्राप्य). — $^{b}$) K1 सैनापत्यम्; K4 सेनापत्तिम्; B1.2.4.5 Da1 D1–5.7 सैनापत्यम् (for सेनापत्यम्). D8 M1 अरिंदम (for अरिंदमः). — $^{d}$) B1 सूर्यस्योदयनावधि; B2 °दयनादधि; D5 °देयनं प्रति; D6 रूपस्योदयनादधि; D8 सूर्यस्योदयानादिति. Ca cites उदयनं (as in text).

46 G1 missing (cf. v. l. 41). — $^{a}$) Dn1 तत्र (for तव). — $^{b}$) G2.3 तव; M2–4 [ऽ]तीव (for तत्र). — $^{c}$) Ś2 स्कंधः (for स्कन्दः). — $^{d}$) K1 संग्रामे; D1 संग्राम (for संग्रामे). B1 तारकक्षये; G3 तारकामयोः; Ca as in text.

Colophon missing in G1. — *Adhy. name:* K3 B1–3 Da1 Dn1 D1.3–5.7 T1.2 कर्णाभिषेकः; V1 कर्णप्रधानकं चाभिषेकः; M1 कर्णाभिषेचनं. — *Adhy. no.* (figures, words or both): Ś2 6 (as in text); B1.2.5 Da1 D5.6.8 10; Dn1 D4 11; T1.3 G2.3 M 7; T2 9. — *Śloka no.:* Dn1 59.

# ७

धृतराष्ट्र उवाच ।
सेनापत्यं तु संप्राप्य कर्णो वैकर्तनस्तदा ।
तथोक्तश्च स्वयं राज्ञा स्निग्धं भ्रातृसमं वचः ॥ १
योगमाज्ञाप्य सेनाया आदित्येऽभ्युदिते तदा ।
अकरोत्किं महाप्राज्ञस्तन्ममाचक्ष्व संजय ॥ २
संजय उवाच ।
कर्णस्य मतमाज्ञाय पुत्रस्ते भरतर्षभ ।
योगमाज्ञापयामास नान्दीतूर्यपुरःसरम् ॥ ३
महत्यपररात्रे तु तव पुत्रस्य मारिष ।
योगो योगेति सहसा प्रादुरासीन्महास्वनः ॥ ४
नागानां कल्पमानानां रथानां च वरूथिनाम् ।
संनह्यतां पदातीनां वाजिनां च विशां पते ॥ ५
क्रोशतां चापि योधानां त्वरितानां परस्परम् ।
बभूव तुमुलः शब्दो दिवस्पृक्सुमहांस्तदा ॥ ६
ततः श्वेतपताकेन बालार्काकारवाजिना ।
हेमपृष्ठेन धनुषा हस्तिकक्ष्येण केतुना ॥ ७

C. 8. 406
B. 8. 11.7
K. 8. 8.7

## 7

1 In $G_1$, st. 1–30 are missing (cf. v. l. 8. 6. $41^{ab}$). Before the ref., $G_2$ ins. श्रीकृष्णाय नमः. — a) $V_1$ B $Da_1$ $D_{3-5}$ Ca सैनापत्यं. $D_6$ समरे; $D_8$ संप्राप्तः; Ca संप्राप्य (as in text). $K_1$ सैनामन्यत्र संप्राप्य (sic). — $K_2$ om. (hapl.) $1^c$–$2^b$. — c) $K_4$ ततोक्तश्च; $V_1$ तदुक्तस्तु; $B_1$ $D_8$ $T_{2.3}$ $G_{2.3}$ तथोक्तस्तु; $B_4$ यथोक्तश्च. — d) $K_4$ स्निग्ध-; $D_8$ स्नेग्यं (sic) (for स्निग्धं). $K_1$ स्निग्धभातृममवचः (sic); S ($G_1$ missing) स्निग्धो भ्रातृसमो ($T_1$ °मा) हि सः ($T_1$ $G_2$ हितः).

2 $K_2$ om. $2^{ab}$ (cf. v. l. 1). — a) $V_1$ $B_{1.2.5}$ $Dn_1$ $D_{6.7}$ सैन्यानाम्; $B_3$ $Da_1$ $D_{1-5}$ सेनानाम् (for सेनाया). — b) $K_1$ आदिते (for आदित्ये). $Da_1$ $D_5$ तथा (for तदा). $V_1$ $B_1$ $D_6$ आदित्या($B_1$ °त्ये)भ्युदयं प्रति; $D_1$ आदित्योभ्युदिते तथा. — For $2^{ab}$, S ($G_1$ missing) subst.:

76* हितश्च प्रियकामश्च मम पुत्रस्य नित्यशः ।

— c) S ($G_1$ missing) किमकार्षीन् ($T_2$ अकरोद्यन्) (for अकरोत्किं). $K_1$ महाप्रज्ञस्; $D_8$ $M_1$ महाप्राज्ञ. — d) $M_1$ संजयः.

3 $D_6$ om. the ref. — a) $D_8$ कर्णस्तु. $K_3$ आस्थाय (for आज्ञाय). — b) Ś $K_{1.2}$ $B_{1.3-5}$ $Da_1$ $D_{1.3-5.7}$ पुत्रास्ते. $D_8$ तव पुत्रस्य मारिष. — c) B $D_{2-4.7}$ आज्ञापयामासुर्; $Da_1$ $D_{1.5}$ $M_4$ अज्ञापयामासुर् ($Da_1$ °सु; $M_4$ °स). — d) $K_1$ कंदीभूर्यपुरःसरं (sic); $V_1$ $B_{1.2.4.5}$ $D_{3-5.7}$ $T_{1.2}$ Cap नंदितूर्यपुरःसरं ($T_1$ °राः); $B_3$ वंदिहर्य°; $Da_1$ नेरीतूर्य°; $Dn_1$ तदा तूर्य°; $D_1$ दनोदीतूर्य° (sic); $D_2$ नंदिरूपं पुरःसरं; $D_6$ बंदितूर्य°; $D_8$ नांदीकूर्य°; $T_1$ तूर्यनाद°; $T_3$ नांदितूर्य°; $G_2$ नानातूर्य°; $M_1$ नांदीतूर्यपुरःसरः; Ca बंदिभृत्यपुरःसराः. Cc cites नंदितूर्यम्.

4 a) $D_3$ om. तु. B $Da_1$ $D_{1.4.7.8}$ $T_3$ $G_3$ च (for तु). $K_4$ महत्यपदनादे तु (sic); $Dn_1$ $D_6$ संहत्यापररात्रे तु; $D_2$ महत्यापररात्रेषु; $D_5$ $G_2$ महत्यपरागे च ($G_2$ °रात्रेण). Cc cites अपररात्रे वा. — b) $V_1$ B D (except $D_8$) S ($G_1$ missing) सैन्यस्य ($D_6$ सैन्यं च) (for पुत्रस्य). $K_4$ मारिषः; $Dn_1$ $T_2$ भारत (for मारिष). — c) $Ś_2$ साहस्रा; Ca सहसा (as in text). $K_1$ योगयोगेति सहा*; $K_3$ योगो योग इति क्षिप्रं; S ($G_1$ missing) योगो ($G_2$ योग-; $M_4$ योगे) योग इति ह्याशु. Ca.c cite योगो योगः. — d) $Ś_2$ महान्स्वरः; $D_2$ महात्मनः (for °स्वनः).

5 a) $V_1$ $B_1$ $Da_1$ $T_1$ M कल्प्यतां; $B_{2.4.5}$ $Dn_1$ $D_{2.4.6-8}$ $T_3$ $G_3$ Cc कल्पतां; $B_3$ $D_5$ कल्पातां; $D_{1.3}$ $T_2$ $G_2$ कल्पं($D_3$ $T_2$ °ल्प्यं)तां (for नागानां). $Ś_1$ $K_2$ कंप्यमानानां; $Ś_2$ illegible; $K_{1.4}$ कंप°; $V_1$ B D S ($G_1$ missing) नाग($B_5$ $T_3$ $G_{2.3}$ राज)मुख्यानां; Cc कल्पमानानां (as in text). Ca cites कल्पमानं. — b) $K_3$ चराणां (for रथानां). $Dn_1$ च वरूथिनीं; $D_8$ सविरूथिनां. — c) $K_3$ सनह्यतां; $G_2$ संनह्यंतां. $B_1$ च पत्तीनां; $D_2$ पदा*नां; Bom. ed. नराणां च (for पदातीनां). — d) $D_3$ वाजिनांश्च; $D_8$ (before corr.) वाजीनां च.

6 a) $B_{2.3}$ $D_{3.4.7}$ चैव (for चापि). M यौधानां. — b) $B_3$ त्वरतां च (for त्वरितानां). — c) $Ś_2$ $K_3$ $D_8$ तुमलः; $K_4$ तुमुल-. — d) $T_{1.2}$ $G_2$ $M_{2-4}$ दिविस्पृक्. $K_1$ $T_1$ स महांस् (for सुम°). $B_{1-3}$ $Da_1$ $D_{1.3-5.7}$ ततः; $T_2$ तथा (for तदा). $Dn_1$ उदधेरिव गर्जतः; $D_8$ दिवस्पृगिव सर्वतः.

7 a) $T_1$ $G_2$ तत-. $K_1$ श्वेते पताकेन. — b) $K_{1.4}$ बलाकाकारवाजिना; $K_3$ $V_1$ B D T $G_3$ M बलाकावर्ण($B_5$ °वल्गु)वाजिना ($D_1$ °नां; $D_5$ °नाः); $G_2$ बलाकार्णववाजिनौ.

C. 8. 407
B. 8. 11. 8
K. 8. 8. 8

तूणेन शरपूर्णेन साङ्गदेन वरूथिना ।
शतघ्नीकिङ्किणीशक्तिशूलतोमरधारिणा ॥ ८
कार्मुकेणोपपन्नेन विमलादित्यवर्चसा ।
रथेनातिपताकेन सूतपुत्रो व्यदृश्यत ॥ ९
धमन्तं वारिजं तात हेमजालविभूषितम् ।
विधुन्वानं महच्चापं कार्तस्वरविभूषितम् ॥ १०
दृष्ट्वा कर्णं महेष्वासं रथस्थं रथिनां वरम् ।
भानुमन्तमिवोद्यन्तं तमो घ्नन्तं सहस्रशः ॥ ११
न भीष्मव्यसनं केचिन्नापि द्रोणस्य मारिष ।
नान्येषां पुरुषव्याघ्र मेनिरे तत्र कौरवाः ॥ १२
ततस्तु त्वरयन्योधाञ्शङ्खशब्देन मारिष ।
कर्णो निष्कासयामास कौरवाणां वरूथिनीम् ॥ १३
व्यूहं व्यूह्य महेष्वासो माकरं शत्रुतापनः ।
प्रत्युद्ययौ तदा कर्णः पाण्डवान्विजिगीषया ॥ १४
मकरस्य तु तुण्डे वै कर्णो राजन्व्यवस्थितः ।
नेत्राभ्यां शकुनिः शूर उलूकश्च महारथः ॥ १५

---

— c) K3 हैमपृष्ठेन; Dn1 हेमपृष्टेन. — d) K3 V1 B1 D6.8 T3 हस्तिकक्षेण (D8 °न); B2–5 Da1 D1.3–5.7 नागकक्षे(D5 °क्ष्ये)ण; D2 हस्तिकक्षिन. K1 (before corr.) केर्तुना; B2 हेतुना (for केतुना).

8 a) Ś1 भूपेण (by corr. नरेण); K4 तूर्णेन; T1 तूणिना (for तूणेन). K1 भूयोगशरपूर्णेन; K2 नृपेण शतपूर्णेन; V1 B D (except Dn1) T3 G3 M2 तूणीरशतपूर्णेन; G2 तूणीशयस्सपूर्णेन; M1.3.4 तूणीरशरपूर्णेन. — b) B4 D6.7 (*sup. lin.*) सगदेन; Dn1 सखड्गेन; D1 सागदेन; D2 शांगदेन; D7 सगनेन; D8 (by corr.) सनादेन; T2.3 G2.3 तोमरेण (T2 °णा) (for साङ्गदेन). M2.4 वरूथिनां. — T2 om. $8^{cd}$. — cd) K3 T1 शतघ्निकिंकिणीशक्तिशूलतोमरवारिणी (T1 °धारिणा); Da1 D1.5 G2 शतघ्नीकिंकिणीशक्तिः शूलतोमरधारिणा (G2 °पाणिना); Dn1 M2.4 शतघ्नीकं(Dn1 °किं)कणीशक्ति°; M1 शतघ्नीककिणीशक्तिः शूल°.

9 a) Ś K1.2.4 D6 कार्मुकेनोपपन्नेन; B Da1 Dn1 D1–5.7.8 S (G1 missing) कार्मुकैरु(D4 °रू)प°. — b) Ś K2.4 तुमुलादित्यवर्चसा. — c) K1 रथेनाभिपताकेन; T2 G2.3 °नापतता तेन. — d) K3 व्यदृश्यते; B2 [ऽ]भ्यरोचत; B4.5 Da1 D1.3–5.7 [ऽ]भ्यदृश्यत; T2 [ऽ]त्यदृश्यत; M3 [ऽ]प्यदृश्यत (for व्यदृश्यत).

10 a) K3 V1 B1.3–5 D (except Dn1 D8) T G2.3 M2–4 ध्माप(G2 °म)यन्; B2 धूमंतं (for धमन्तं). B2–5 D (except D2.6.8) T1.2 G2.3 M2–4 राजन्; T3 शंखं (for तात). M1 ध्मापययारिजं राजन् (sic). — b) Ś1 K1.2 फेनजालविभूषितं; D8 हेममालावि°. — Ś2 om. (hapl.) $10^{cd}$. — c) K4 विध्वन्वानं (sic); B (except B1) Da1 D1.3–5.7 विधुन्वानो; T1.2 G2 M विधून्वानं. B3 महेश्वासं (for महच्चापं). — d) Dn1 S (G1 missing) हेमपृष्ठं नवं दृढं (T2.3 G2.3 दृढं नृप).

11 a) D8 महात्मानं; M1 महेष्वास. — b) G2 सारथिं (for रथस्थं). B2 रथमं (for रथिनां). — c) K3 इव प्रेतं; K4 इवोध्यंत; D3 इवोधन्वं (for इवोद्यन्तं). — d) K3 V1 B1.4.5 D2–4.6.7 निघ्नन्; B3 -विघ्नं; Da1 D1.5 -निघ्नं (for घ्नन्तं). V1 B1.2 Dn1 D2.6.8 समंततः; B3–5 Da1 D1.3–5.7 S (G1 missing) दुरासदं (for सहस्रशः).

12 T1 om. $12^{ab}$. — a) K3 तं पार्थव्यसनं केचिन्. — b) B3–5 भारत (for मारिष). — c) B2 पुरुषव्याघ्रा; Dn1 °व्याड (for °व्याघ्र). — d) K1 नेसिने (sic) (for मेनिरे). B1 मानवाः; G2.3 गौरवात् (for कौरवाः).

13 a) Dn1 वीर; M यौधान् (for योधान्). K3 ततस्तु त्वरयोधानां. — b) Dn1 मारिषः. B2 शंखशब्देनापि मारिष (hypermetric); T2 भृशं शंखेन मारिष. — c) K2 कर्णौ. K1 निष्कंपयामास; K3 निष्काश°; K4 निष्काम°; V1 निःकाल°; B1.3–5 Da1 D1.3–5.7 निष्कर्ष°; B2 T1.3 G2.3 M निष्क्राम°; Dn1 निःक्राम°; D2 निक्राम°; D6 निष्काल°; T2 निस्कास° (for निष्कास°). — d) Ś2 K1.4 Dn1 कारवानां. K1.3 महाचमूं; V1 B D S (G1 missing) महद्बलं (for वरूथिनीम्).

14 a) B3 D5 om. व्यूहं. B2 Dn1 व्यूह्य व्यूहं (by transp.); D2 व्यूढ व्यूह्यं. K1 Dn1 महेष्वासं (for °सो). — b) Ś2 माकारं; K3.4 V1 B D (except D4) T1.2 M मकरं. V1 B1.2 D6 T2 शत्रुतापनं (for °नः). — For $14^{ab}$, T3 G2.3 subst.:

77* मकरव्यूहमास्थाय दंशितो रविनन्दनः ।

— c) D1 प्रत्यद्ययो (sic); D8 (before corr.) प्रत्युद्ययुस् (for °द्ययौ). B2 D7 T1 तथा कर्णः; G2 महाराज (for तदा कर्णः). — d) D5.8 विजा(D8 °ज)गीषया; D6 विजिगीषवान्; T1 प्रति भारत (for विजिगीषया). G2 कर्णः पार्थजिगीषया.

15 a) B3.5 तुंडेन; B4 तुंडे च; Da1 D1.5 तुंडे तु (for तुण्डे वै). K1 मकारस्य च तुंडे वै; Dn1 D8 T2 मकरस्य स्वयं तुंडे; T1.3 G2.3 M मकरस्याथ तुंडे तु. — b) D5 व्यवस्थितेः. K3 कर्ण राजन्नवस्थितः. — c) V1 B1 Dn1

द्रोणपुत्रस्तु शिरसि ग्रीवायां सर्वसोदराः ।
मध्ये दुर्योधनो राजा बलेन महता वृतः ॥ १६
वामे पादे तु राजेन्द्र कृतवर्मा व्यवस्थितः ।
नारायणबलैर्युक्तो गोपालैर्युद्धदुर्मदः ॥ १७
पादे तु दक्षिणे राजन्गौतमः सत्यविक्रमः ।
त्रिगर्तैश्च महेष्वासैर्दाक्षिणात्यैश्च संवृतः ॥ १८
अनुपादस्तु यो वामस्तत्र शल्यो व्यवस्थितः ।
महत्या सेनया सार्धं मद्रदेशसमुत्थया ॥ १९
दक्षिणे तु महाराज सुषेणः सत्यसंगरः ।
वृतो रथसहस्रैश्च दन्तिनां च शतैस्तथा ॥ २०
पुच्छे आस्तां महावीरौ भ्रातरौ पार्थिवौ तदा ।
चित्रसेनश्च चित्रश्च महत्या सेनया वृतौ ॥ २१
ततः प्रयाते राजेन्द्र कर्णे नरवरोत्तमे ।
धनंजयमभिप्रेक्ष्य धर्मराजोऽब्रवीदिदम् ॥ २२
पश्य पार्थ महासेनां धार्तराष्ट्रस्य संयुगे ।
कर्णेन निर्मितां वीर गुप्तां वीरैर्महारथैः ॥ २३
हतवीरतमा ह्येषा धार्तराष्ट्री महाचमूः ।
फल्गुशेषा महाबाहो तृणैस्तुल्या मता मम ॥ २४

C. 8. 243
B. 8. 11. 24
K. 8. 8. 24

---

T1.3 G2.3 M नेत्रयोः (for नेत्राभ्यां). K1 शूरा; T1 चैव (for शूर). — d) D4 (by corr.).8 उलकश्च. K3 महाबलः; D1 महारथाः (for °रथः). K4 नलूकश्च महारथ; D5 उलूकय महारयः (corrupt).

16 a) B1 द्रोणपुत्रस्य; B3 °पुत्रश्च. — b) Da1 D1.5 सर्वयादवाः; T1 सर्वतो नृपाः (for °सोदराः). — c) Dn1 राजन् (for राजा).

17 a) K3 B Da1 Dn1 D1.2.5.7.8 T G3 M वामपादे; V1 वामे भागे; D6 वामभागे (for वामे पादे). G2 वामपदेन राजेंद्र. — c) Da1 Dn1 D1.5 S (G1 missing) गुप्तो (for युक्तो). — d) D1 लोकपालैर् (hypermetric) (for गोपालैर्). Ś1 K3 V1 B (except B3) D S (G1 missing) युद्धदुर्मदैः.

18 a) K1 पदे; D8 (before corr.) पादो; G2 पादा (for पादे). Dn1 दक्षणे. — b) D1 गौतम. — c) K2 त्रिगंतैश्च; B3 D1 त्रैगर्तैश्च; Dn1 त्रिगर्तश्च; D5 त्रेगर्तैश्च. K4 B1.5 D3.7 सु-; T1 तु (for च). D5 महेष्वासे. — d) K1 दक्षिणाभ्यैश्च; K3.4 दक्षिणात्यैश्च. D4 संवृताः.

19 a) Ś1 K2 अनूपादस्तु; B3 M2.4 अनुपादं तु; D2 अन्वपादस्तु; T2 तस्य पादस्तु (for अनुपादस्तु). Ca cites अनुपादस् (as in text); Cc अनुवादः. K3 राजन्; G2 श्चस्तस्; G3 वीरस्; Ca वामस् (as in text). K1 अनुपादास्तु यो वासास्; D1 °पादस्तु वामपार्श्वे (hypermetric). — D8 om. 19c–20b. — d) Dn1 मद्रदेशसमुच्छया; S (G1 missing) नानादेशसमुत्थया (T1 °समृद्धया).

20 D8 om. 20ab (cf. v. l. 19). — a) K1 (before corr.) दक्षिणेस्तु; B3.4 Da1 D1 दक्षिणेन. Cc cites दक्षिणे (as in text). T3 महाराजः. — b) K4 V1 सुखेणः. K3 सत्यमत्परः; B2 सत्यविक्रमः; Ca सत्यसंगरः (as in text). — c) B Da1 D1–5.7 रथसहस्रेण; D6 °सहस्रैस्तु. — d) D6 तु (for च). V1 B Da1 D1.3–5.7 त्रिभिः शतैः (for शतैस्तथा). Dn1 D2.6 तदा (for तथा). K3 दंतिनां त्रिशतैस्तथा.

21 a) Ś K1.2.4 V1 B1 D2.6 T1.3 G3 M पुच्छे ह्यास्तां; B2.3 D1.3.4.7 पुच्छेप्यास्तां; B4.5 पुच्छेस्यास्तां; Da1 D5 पुच्छेयास्तां; Dn1 पुछेस्वास्तां; D8 पुच्छे त्वास्तां; T2 पुच्छे चास्तां. V1 B D (except D6.8) T G3 M महावीर्यौ. G2 प्रपुच्छे*****. — b) V1 B1 Dn1 D2.6 पार्थि(Dn1 °र्थि)वर्षभौ; D8 T1 M पार्थिवोत्तमौ; T2.3 G2.3 °वात्मजौ (for पार्थिवौ तदा). K1 B3 तथा. — c) B2.3.5 Da1 D1–5.7.8 चित्रश्च चित्रसेनश्च; Dn1 चित्रसेनो विचित्रश्च; S (G1 missing) विचित्रश्चित्रसेनश्च. — d) Dn1 वृतैः; D5 वृतो.

22 a) B (except B1) Da1 D3–5.7 तथा (for ततः). K1 प्रधाने; D2 प्रजाते; D5 प्रयते (for प्रयाते). — b) K4 नरवरोत्तमै; D1 °रोत्तमौ; T3 G2.3 रथवरोत्तमे. — c) K1 अभिप्रेक्ष; D6 प्रतिप्रेक्ष्य (for अभिप्रेक्ष्य). — d) D2 धर्मराजा.

23 Before 23, D8 ins. युधिष्ठिर उवाच. — a) K4 D2 T1.3 G2.3 M यथा सेनां; V1 B D3.4.6.7 यथा सेना (for महासेनां). — b) V1 B1.3–5 Da1 D1–7 धार्तराष्ट्री-(Da1 °ष्ट्रीं)ह; B2 °राष्ट्री च; T2 °राष्ट्रं तु; T3 °राष्ट्रां तु; G2.3 M °राष्ट्रीं तु (for °राष्ट्रस्य). Dn1 D8 धार्तराष्ट्रीं महारणां (D8 °चमूम्). — c) V1 B1 D2 निर्मिता; B2–5 D3–5 विहिता; Da1 D1 विहितां; D7 निहिता (for निर्मितां). B4 वीरैर्. — d) V1 B1 युक्ता; B2–5 D2–4.7 गुप्ता. V1 T1.2 M1–3 शूरैर्; G2 श्वेतैर् (for वीरैर्). D6 धार्तराष्ट्रैर्महायुधैः.

24 a) Ś1 (*sup. lin.* as in text) K1.2 D8 हतवीर्यतमा; K4 °वीरथमा (sic); Cc °तमा (as in text). — b) Ś2 धार्तराष्ट्रे; T2 धार्तराष्ट्र- (for °राष्ट्री). K3 धार्तराष्ट्रमहाचमू; T1 °राष्ट्रमहच्चमूः. — c) Ś1 K2 फल्गुनैषा; Ś2 K4 फाल्गुनैषा; K1 फल्गुपौषा; V1 B1.3 D6 कर्णशे(B1 °से)षा;

C. 8 om. B. 8. 11. 25 K. 8. 8. 25

एको ह्यत्र महेष्वासः सूतपुत्रो व्यवस्थितः ।
सदेवासुरगन्धर्वैः सकिंनरमहोरगैः ।
चराचरैस्त्रिभिर्लोकैर्योऽजय्यो रथिनां वरः ॥ २५
तं हत्वाद्य महाबाहो विजयस्तव फल्गुन ।
उद्धृतश्च भवेच्छल्यो मम द्वादशवार्षिकः ।
एवं ज्ञात्वा महाबाहो व्यूहं व्यूह यथेच्छसि ॥ २६
भ्रातुस्तद्वचनं श्रुत्वा पाण्डवः श्वेतवाहनः ।
अर्धचन्द्रेण व्यूहेन प्रत्यव्यूहत तां चमूम् ॥ २७
वामपार्श्वेऽभवद्राजन्भीमसेनो व्यवस्थितः ।
दक्षिणे च महेष्वासो धृष्टद्युम्नो महाबलः ॥ २८
मध्ये व्यूहस्य साक्षात्तु पाण्डवः कृष्णसारथिः ।
नकुलः सहदेवश्च धर्मराजश्च पृष्ठतः ॥ २९
चक्ररक्षौ तु पाञ्चाल्यौ युधामन्यूत्तमौजसौ ।
नार्जुनं जहतुर्युद्धे पाल्यमानौ किरीटिना ॥ ३०
शेषा नृपतयो वीराः स्थिता व्यूहस्य दंशिताः ।
यथाभावं यथोत्साहं यथासत्त्वं च भारत ॥ ३१
एवमेतन्महाव्यूहं व्यूह्य भारत पाण्डवाः ।
तावकाश्च महेष्वासा युद्धायैव मनो दधुः ॥ ३२

---

Cc फल्गुशेषा (as in text). Ca cites फल्गु. T1 महाबाहु. — T1 om. (hapl.) 24$^{d}$–26$^{a}$. — $^{d}$) Ś2 K4 तृणस्तुल्या म(K4 ग)ता मम; V1 T2.3 G2.3 तृणैस्तुल्यतमा मम (T2.3 G3 मता).

25 T1 om. 25 (cf. v. l. 24). — $^{a}$) B1 एषो (for एको). B3 महाबाहो (for महेष्वासः). — $^{b}$) V1 B1 D2 M2–4 विरोचते; B2–5 Da1 Dn1 D1.3–7.8 (by corr.) विराजते; T2.3 G2.3 M1 व्यरोचत (for व्यवस्थितः). D8 (before corr.) सूतपुत्रेव राजते. — $^{e}$) Dn1 लोके (for लोकैर्). — $^{f}$) K4 D6 योजयो; Dn1 योजेयो (for योऽजय्यो). T2.3 G2.3 M अजय्यो (T2 G3 °जेयो; G2 °मेयो) यो महारथः. Ca.c cite अजय्यो (as in text).

26 T1 om. 26$^{a}$ (cf. v. l. 24). — $^{b}$) M1 विजयं. K (except K1) V1 B D फाल्गुन. — $^{c}$) K3 उद्धृतश्च. T G2.3 M1 उद्धृतं च भवे(T2 °व)च्छल्यं. — $^{d}$) K1 सम-; M2–4 महान् (for मम). K3 T G2.3 M मम द्वा(K3 T1 M1 मद्द्वा)दशवार्षिकं. — $^{e}$) B1 एवं गत्वा; Ś (G1 missing) एतज्ज्ञात्वा (for एवं ज्ञात्वा). M2–4 महेष्वास (for महाबाहो). — $^{f}$) B1 Dn1 M1 व्यूह व्यूहं (by transp.); Da1 D1.5.8 व्यूहं व्यूह्य. K1 तथेच्छसि; Dn1 D8 यथेच्छकं (for °च्छसि). T2 व्यूह्यं व्यूहितुमर्हसि; T3 G2.3 व्यूहं व्यूहितुमिच्छसि.

27 *Before* 27, *T2.3 G3 M ins.* संजयः. — $^{a}$) B (except B1) Da1 D1.3–5 एतद्वचः (for तद्वचनं). D2 भ्रातुस्तव वचनं श्रुत्वा (hypermetric); T1.3 G2.3 M श्रुत्वा तद् (G3 तु) वचनं भ्रातुः. — $^{b}$) D1 पांडव; S (G1 missing) कौंतेयः (G2 M1.3 °य) (for पाण्डवः). — $^{c}$) K1 अर्धचंद्रे; Da1 D1.5 °चंद्रेन. — $^{d}$) D5 व्यत्यव्यूहत; T1 प्रति°; G2 M2–4 प्रत्यव्यूहत. K1 (*sup. lin.*) च (for तां).

28 $^{a}$) K1 भवेद् (for ऽभवद्). V1 वामे पार्श्वे महाबाहो; B D वामपार्श्वे तु तस्याथ (Dn1 महाराज; D2.6 महाबाहुर्); S (G1 missing) वामशृंगे तु राजेंद्र. — $^{b}$) T2 (before corr.) व्यरोचत (for व्यवस्थितः). D5 भीमसेनोप्यवस्थितः. — $^{c}$) Ś2 K4 T1 दक्षिणेन; Da1 D1.6.7 T2.3 G2.3 M °णे तु (for °णे च). K1 महेष्वासौ; S (G1 missing) महाबाहुर् (T1 °बाहो) (for महेष्वासो). — $^{d}$) V1 T2 M1 महारथः; B Da1 D1.3–5.7.8 T3 G2.3 M2–4 व्यवस्थितः (for महाबलः).

29 B2 om. 29. — $^{a}$) K3 V1 B (B2 om.) D राजा तु (Dn1 D8 राजासीत्); S (G1 missing) राजेंद्र (for साक्षात्तु). — $^{b}$) K3 V1 B (B2 om.) D S (G1 missing) पांडवश्च धनंजयः. — $^{c}$) D1 नकुल. — $^{d}$) V1 B (B2 om.) D T3 धर्मराज(D2 °जा)स्य.

30 $^{a}$) V1 D6 T1 च (for तु). T1 पांचालौ. — $^{b}$) K1 D1 T2 युधामन्युत्त(K1 °तु)मौजसौ; T1 °न्युत्तमोजसौ. — $^{c}$) S (G1 missing) पार्थं न (for नार्जुनं). Da1 D1.5 मध्ये (for युद्धे). — $^{d}$) K3 पापात्मानौ (for पाल्यमानौ).

31 G1 resumes. — $^{a}$) Da1 Dn1 D1.5 वीरा. — $^{b}$) K1.4 T3 G M दंसिताः; T2 रक्षिणः (for दंशिताः). — $^{c}$) Ś2 K3 V1 B D S यथाभागं (for यथाभावं). — $^{d}$) K3 यथा सत्रं; B1 यथातत्त्वं; B3.4 D3.4.7 यथायत्नं; D2 यथासत्यं; S (except T2 G1) यथासत्रं.

32 $^{a}$) D8 एवमेनं; T1 G1 एवमेतं; G3 एवमेते. D8 यथा व्यूहं (for महा°). — $^{b}$) K1 व्यूह; K2 व्यूहं; D5 व्युह्य. K1 पांडवः. — $^{d}$) D5 मनै (for मनो). V1 (before corr.) ददुः. S युद्धायैवावतस्थिरे (G1 °यैव व्यवस्थिताः).

दृष्ट्वा व्यूढां तव चमूं सूतपुत्रेण संयुगे ।
निहतान्पाण्डवान्मेने तव पुत्रः सहान्वयः ॥ ३३
तथैव पाण्डवीं सेनां व्यूढां दृष्ट्वा युधिष्ठिरः ।
धार्तराष्ट्रान्हतान्मेने सकर्णान्वै जनाधिप ॥ ३४
ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
सहसैवाभ्यहन्यन्त सशब्दाश्च समन्ततः ॥ ३५
सेनयोरुभयो राजन्प्रावाद्यन्त महास्वनाः ।
सिंहनादश्च संजज्ञे शूराणां जयगृद्धिनाम् ॥ ३६
हयहेषितशब्दाश्च वारणानां च बृंहितम् ।
रथनेमिस्वनाश्चोग्राः संबभूवुर्जनाधिप ॥ ३७
न द्रोणव्यसनं कश्चिज्जानीते भरतर्षभ ।
दृष्ट्वा कर्णं महेष्वासं मुखे व्यूहस्य दंशितम् ॥ ३८
उभे सेने महासत्त्वे प्रहृष्टनरकुञ्जरे ।
योद्धुकामे स्थिते राजन्हन्तुमन्योन्यमञ्जसा ॥ ३९
तत्र यत्तौ सुसंरब्धौ दृष्ट्वान्योन्यं व्यवस्थितौ ।
अनीकमध्ये राजेन्द्र रेजतुः कर्णपाण्डवौ ॥ ४०

C. 8. 438
B. 8. 11. 41
K. 8. 8. 41

33 $^{a}$) K$_3$ व्यूहं; V$_1$ व्यूहां; D$_5$ व्यूढा (for व्यूढां). G$_1$ om. तव. — $^{c}$) D$_5$ निहतात्. K$_3$ Da$_1$ D$_{1.5}$ मन्ये (for मेने). — K$_4$ om. (hapl.) 33$^{d}$–34$^{c}$. — $^{d}$) K$_1$ सूतपुत्रः (for तव पुत्रः). K$_3$ धार्तराष्ट्रसहान्वयान्; V$_1$ D$_{2.6.8}$ धार्तराष्ट्रः सहान्वयान्; B$_1$ धार्तराष्ट्रसहायवान्; B$_{2–5}$ Da$_1$ Dn$_1$ D$_{1.3–5.7}$ धार्तराष्ट्रः (B$_2$ °ष्ट्रं) सबांधवः (Da$_1$ D$_{1.5}$ °वान्); S सकृष्णान्वै जनाधिपः (G$_3$ °प).

34 K$_4$ om. 34$^{abc}$ (cf. v. l. 33). — $^{a}$) B$_3$ तथेव. D$_5$ पांडवी. D$_1$ सेना. — $^{b}$) K$_3$ व्यूहां दृष्ट्वा; D$_7$ व्यूढां राजा; S दृष्ट्वा व्यूढां (by transp.). — $^{c}$) G$_3$ धृतराष्ट्रान्; M$_1$ (by corr.) धार्तराष्ट्रा. K$_3$ मन्ये (for मेने). — $^{d}$) K$_2$ V$_1$ B D (except D$_6$) जनाधिपः (D$_8$ समंततः). K$_3$ सकलैच जनाधिपः (sic); S सकर्णान्ससुयोधनान्.

35 Cf. 6. 23. 13. — $^{a}$) Da$_1$ D$_{1.5}$ शंखां(D$_1$ °ख)श्च. — $^{b}$) K$_1$ B$_{3.4}$ पणवानकदुंदुभीः (B$_3$ °भी); K$_3$ D$_{3.4.7}$ °ढुंदुभिः; D$_8$ °डिंडिमाः. — $^{c}$) K$_{1.3}$ V$_1$ B$_{1.2.4.5}$ Da$_1$ D$_{1–7}$ डिंडिमाश्चाभ्य(K$_1$ °भि-; B$_{2.4}$ D$_{2–4.7}$ °प्य)हन्यंत; B$_3$ डिंडिमाश्च न्यहन्यंत; Dn$_1$ D$_8$ दुंदुभ्यश्चाभ्यहन्यंत; S पटहाश्चाभ्य(T$_1$ °श्च व्य-; T$_3$ G$_3$ °श्चाप्य-; G$_2$ °श्चास्थ)हन्यंत. — $^{d}$) Ś$_1$ (marg.) शब्दयंश्च; K$_1$ दर्शयंश्च; K$_2$ lacuna; K$_3$ D$_1$ गगर्यश्च; V$_1$ B D$_{2–4.6.7}$ G$_1$ झर्झराश्च; Da$_1$ D$_5$ T G$_{2.3}$ M झ(T$_5$ ज)र्झर्यश्च; Dn$_1$ पणवाश्च; D$_8$ झल्लर्यश्च (for सशब्दाश्च). V$_1$ B$_1$ Da$_1$ Dn$_1$ D$_{1.5.6}$ T$_2$ सहस्रशः; D$_8$ जनाधिप (for समन्ततः).

36 $^{b}$) K$_3$ B$_{2.3}$ D$_{6.8}$ प्रवाद्यंत; K$_4$ प्रच्छाद्यंत; S डिंडिमाश्च (G$_2$ पांडवाश्च) (for प्रावाद्यन्त). — $^{c}$) K$_1$ (before corr. as in text) D$_{4.8}$ (before corr.) T$_{1.3}$ G$_{1.2}$ M$_1$ सिंहनादाश्च; K$_2$ °नामश्च. T$_1$ G$_{1.3}$ M$_1$ संजज्ञुः; T$_3$ °ग्मुः; G$_2$ °ह्रुः. — $^{d}$) Ś$_1$ K$_2$ जयगृद्धिणाम्; Ś$_2$ °गृद्धिणाम्; K$_1$ °वृद्धिनाम्; D$_6$ G$_1$ °गर्धिनाम्; D$_8$ T$_2$ °गृध्निनाम्; T$_1$ °मिच्छताम्.

37 $^{a}$) Ś$_1$ K$_2$ जयहेषितशब्दाश्च; Ś$_2$ K$_4$ वाजिहै(K$_4$ °हे)षित°; K$_1$ ह्रायहैषित°; V$_1$ जह्रे हेषितशब्दाश्च; B$_5$ Da$_1$ D$_{1.5.6}$ हय(Da$_1$ °ष)हेषितशब्देन; D$_4$ हयह्रेषितशब्दाश्च; M$_{1.3}$ हयहेषितशब्दश्च. — $^{b}$) Ś$_1$ K$_2$ D$_4$ बृंहितां; V$_1$ damaged; B$_{1.4.5}$ Da$_1$ D$_{1.6}$ T$_2$ बृंहितैः; B$_2$ D$_{3.7}$ बृंहतां; B$_3$ T$_2$ G$_{2.3}$ बृंहिताः; Dn$_1$ D$_5$ बृंहितेः; D$_2$ वाहनैः; T$_1$ बृंहितः; G$_1$ ब्रंहितः; M$_1$ बृंहितं. K$_3$ वारणानां बृहंति च. — $^{c}$) K$_1$ रथे नेमिस्वनाश्चोग्राः; T$_1$ रथनेमिस्वनाश्चाग्र्याः; M$_{2–4}$ °मिस्वनश्चोग्रः. — $^{d}$) K$_4$ जनाधिपः; Dn$_1$ M$_1$ नराधिपः.

38 $^{a}$) T$_1$ किंचित्; T$_3$ G M केचित् (for कश्चित्). — $^{b}$) T$_1$ विजज्ञंस्; T$_3$ G$_1$ विजग्मुस्; G$_2$ विजह्रुस्; G$_3$ M विजज्ञुस् (for जानीते). B (except B$_1$) Da$_1$ D$_{1.3–5.7}$ S (except T$_2$) तत्र भारत (for भरतर्षभ). — $^{d}$) K$_4$ मुख्ये; D$_2$ मृषे (for मुखे). K$_{1.2.4}$ S (except T$_{1.2}$) दंसितं.

39 $^{a}$) V$_1$ *ने; B$_{1–3}$ Da$_1$ D$_{1.4.5.7}$ सैन्ये; B$_4$ सेन्ये; D$_3$ सेन्यो (for सेने). B D (except D$_{6.8}$) S महाराज (for °सत्त्वे). — $^{b}$) D$_8$ प्रहुष्ट-; T$_1$ प्रणष्ट- (for प्रहृष्ट-). K$_4$ -नरकुंजर; B$_{3–5}$ D$_{3.4.7}$ -नरसंकुले; D$_5$ -नरकुंजरी. Ś K$_{1.2}$ प्रहृष्टे नरकुंजर (K$_1$ °रे); B$_2$ प्रहृष्टे जनसंकुले. — $^{c}$) Ś K B$_1$ Dn$_1$ युद्धकामे; D$_6$ युद्धकाम-; D$_8$ युद्धकाले; G$_1$ योद्धुकामो (for °कामे). G$_1$ स्थितो. Da$_1$ D$_5$ राज; S यत्ते (for राजन्). — $^{d}$) Ś K$_{1.2.4}$ B$_{1.4}$m Dn$_1$ D$_{2–4.6.7}$ G$_3$ ओजसा (for अञ्जसा).

40 $^{a}$) K$_1$ तत्र यंतौ; K$_4$ यत्नवंतौ; B$_2$ तत्र योधान्; Dn$_1$ त्रयायतौ; D$_6$ तत्र पात्तौ. B$_2$ सुसंरब्धान्; B$_5$ महेष्वासौ (for सुसंरब्धौ). S (except T$_2$) विजये जातसंरंभे. — $^{b}$) K$_{3.4}$ दृष्ट्वान्योन्य-. B$_2$ व्यवस्थितान्; D$_2$ °स्थितं; T$_{1.3}$ G M$_{2–4}$ अवस्थिते (T$_3$ G$_3$ °तौ); M$_1$ उपस्थितं. — $^{c}$) K$_{1.2}$ अनेकमध्ये. — $^{d}$) B$_{3–5}$ Da$_1$ D$_{1.3.4.7}$ चेरतुः; D$_2$ रेजाते; D$_6$ राजेते (for रेजतुः). Da$_1$ D$_{1.5}$ कर्णफाल्गुनौ.

C. 8. 439
B. 8. 11. 42
K. 8. 8. 42

नृत्यमाने तु ते सेने समेयातां परस्परम् ।
तयोः पक्षैः प्रपक्षैश्च निर्जग्मुर्वै युयुत्सवः ॥ ४१

ततः प्रववृते युद्धं नरवारणवाजिनाम् ।
रथिनां च महाराज अन्योन्यं निघ्नतां दृढम् ॥ ४२

इति श्रीमहाभारते कर्णपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

## ८

संजय उवाच ।
ते सेनेऽन्योन्यमासाद्य प्रहृष्टाश्वनरद्विपे ।
बृहत्यौ संप्रजह्राते देवासुरचमूपमे ॥ १

ततो गजा रथाश्वाश्वाः पत्तयश्च महाहवे ।
संप्रहारं परं चक्रुर्देहपाप्मप्रणाशनम् ॥ २
पूर्णचन्द्रार्कपद्मानां कान्तित्विड्गन्धतः समैः ।

---

41 [a]) $B_{4.5}$ $Da_{1}$ $D_{1}$ Cc नृत्यमानेव; $D_{5}$ नृत्यामाने च; $T_{1.3}$ $G_{1.3}$ M नृत्यंताविव; $G_{2}$ नृत्यंत इव (for नृत्यमाने तु). $V_{1}$ $B_{1.2}$ $D_{2-4.7}$ च (for तु). $K_{3}$ उभे; $B_{3}$ च तत् (for तु ते). $B_{3}$ सैन्ये. — [b]) $K_{1}$ सेनेयेता परस्परं; S (except $T_{2}$) प्रजग्मतुरभीतवत्. — [c]) $K_{3}$ $V_{1}$ B (except $B_{2}$) D (except $Dn_{1}$ $D_{8}$) तेषां (for तयोः). $B_{1.4}$ पक्षाः प्रपक्षाश्च; $B_{2.3}$ $D_{6}$ पक्षप्रपक्षैश्च; $Dn_{1}$ $D_{8}$ S पक्षप्रपक्षेभ्यो; $D_{5}$ पक्षाः प्रपक्षौ च (for पक्षैः प्रपक्षैश्च). Cc cites पक्षैः प्रपक्षैः (as in text). — [d]) $K_{3.4}$ $B_{1.4.5}$ $Da_{1}$ $D_{1.5}$ निर्ज- ($K_{4}$ $D_{1.5}$ °ज)ग्मुः; $V_{1}$ निजगुर्; S निर्ययुः (for निर्जग्मुर्). $B_{2.3.5}$ $Da_{1}$ $D_{1.3-5.7}$ ते; S (except $T_{2}$) च (for वै). $K_{1}$ च युत्सवः (sic); $B_{4}$ परस्परं; $D_{1}$ ययुत्सवः (sic).

42 [c]) $K_{1}$ रथानं; $K_{2.3}$ $V_{1}$ B D (except $D_{6}$) रथानां (for रथिनां). Ś$_{2}$ om. च. $K_{3}$ $D_{8}$ तदा ($D_{8}$ °था) राजन्; $T_{1}$ महाराजन् (for महाराज). — [d]) Ś $K_{2.4}$ त्वन्योन्यं; $K_{1}$ न्यन्योन्य-; $Dn_{1}$ अन्यौन्यं. S भृशं (for दृढम्). B (except $B_{1}$) $Da_{1}$ $D_{1.3-5.7}$ Ca (marg. *sec. m.*) अन्योन्यमभिनिघ्नतां; Ca (orig.) as in text.

Colophon. — *Adhy. name:* $K_{3}$ व्यूहरचना; $Dn_{1}$ सेनाव्यूहं; $T_{1}$ $M_{1}$ व्यूहकरणं; $T_{2}$ व्यूहविधानं. — *Adhy. no.* (figures, words or both): Ś$_{2}$ 7 (as in text); $B_{1.4.5}$ $Da_{1}$ $D_{1.5.6.8}$ 11; $D_{4}$ 12; $T_{1.3}$ G M 8; $T_{2}$ 10.

### 8

1 $D_{8}$ $G_{1}$ $M_{1}$ om. the ref. $G_{2}$ ins., after the ref. श्रीकृष्णाय नमः. — [a]) $T_{1}$ M सेने ते (by transp.). — [b]) $V_{1}$ $D_{8}$ (before corr.) प्रहृष्टाश्वनराधिपे; $Dn_{1}$ °रथद्विपे; $D_{1}$ °नरद्विजे; $T_{2}$ $G_{1.2}$ $M_{2.3}$ प्रहृष्टाश्च नरद्विपे ($G_{2}$ नदीसुखे) (sic). — [c]) $K_{3}$ बृहती; $Dn_{1}$ $T_{3}$ $G_{3}$ बृहंत्यौ (for बृहत्यौ). $K_{1}$ संप्रजह्वाते; $V_{1}$ °जघ्नाते; $Dn_{1}$ $D_{8}$ संप्रकाशेते; $M_{2}$ संप्रहारे ते; $M_{4}$ संसंप्रह्राते (for संप्रजह्राते). $B_{3}$ वर्धमाने प्रजह्राते; $G_{2}$ बृहत्यसौ रुजभ्रांशः (sic). — [d]) Ś K $B_{2.3.5}$ $Da_{1}$ $D_{1.3-5.7.8}$ देवासुरसमप्रभे; $V_{1}$ $B_{4}$ $D_{2.6}$ °चमू($D_{2}$ °मूं)-प्रभे; $B_{1}$ $T_{3}$ G °चमूसमे; $T_{2}$ °चमूनिभे.

2 [a]) $K_{2}$ तथा (for ततो). Ś$_{1}$ $K_{1}$ गजरथाश्वाश्वाः; $K_{3}$ $B_{2-5}$ $D_{2-4.7.8}$ $T_{3}$ $G_{1.3}$ $M_{1-4}$ न($D_{8}$ $M_{2-4}$ व)ररथाश्वेभाः ($B_{4}$ $D_{3.4.7}$ °भैः; $D_{2}$ $M_{1}$ °भा; $G_{1}$ °भ्यः); $B_{1}$ नररथा**; $Da_{1}$ $D_{1.5}$ नररथाश्वौघ्नाः; $Dn_{1}$ वररथाश्वैश्च; $D_{6}$ नरा रथाः श्वेताः; $T_{1}$ नररथाश्विभ्यां; $T_{2}$ रथवराश्वेभाः; $G_{2}$ नरवराश्वेमाः (for गजा रथाश्वाश्वाः). — [b]) $K_{1}$ प्रभुयश्च (sic) (for पत्तयश्च). $B_{1}$ [उ]ग्रमाहवे; $B_{2-5}$ $Da_{1}$ $D_{1.3-5.7}$ [उ]ग्रविक्रमाः. — [c]) $B_{2.3}$ $Da_{1}$ $D_{1.3-5.7}$ संप्रहारान्; $D_{2}$ संप्रहार- (for संप्रहारं). $B_{2.3}$ $Da_{1}$ $D_{1.3-5.7}$ भृशं; $B_{4}$ ततः; S महच् (for परं). $K_{3}$ संप्रहारं च कुर्वंत; $V_{1}$ $B_{1}$ प्रहारं परमं चक्रुर्; $D_{8}$ संप्रहारं प्रचक्रुर्वै. — [d]) Ś $K_{2-4}$ $B_{4.5}$ Ca.c देहपाप्मा(Ś$_{2}$ $K_{4}$ °प्म-)सुनाशनं; $K_{1}$ °पास्समुनाशनं (sic); $V_{1}$ $D_{2}$ °पाप्माप्रणाशनं; $B_{1}$ °पाप्मप्रनाशनान्; $B_{2.3}$ $Da_{1}$ $D_{3.4.7}$ °पाप्मासु($D_{4}$ °श्रु)नाशनान्; $Dn_{1}$ $T_{2}$ देहे ($T_{2}$ °ह-)-प्राणविनाशनं; $D_{1}$ देहपाप्मासुनारकान्; $D_{5}$ °पाप्मासुनाशनान्; $D_{6}$ °पापप्रणाशनं; $T_{1}$ सर्वदेहविनाशनं; $T_{3}$ G M देहपाप्म-(G °प)विनाशनं; Ccp °पाप्माप्रनाशनं.

3 [a]) $D_{8}$ om. (hapl.) the portion from चन्द्रा up to अर्ध (in 4[a]). — [a]) $K_{3}$ पूर्णा- (for पूर्ण-). — [b]) Ś$_{1}$ $K_{2}$ कांतित्विग्गंधतः; $K_{1}$ कांतित्वियंधतः; $K_{3}$ कांतिचिद्रुचः; $V_{1}$ $B_{1.3-5}$ $D_{2-4.6.7}$ °भिर्गंधतः; $B_{2}$ °भिर्गरुतः; $Da_{1}$ $D_{1.5}$ कांतिभिर्देवतः (sic); $T_{1}$ कांतित्विड्गंधतत्-; $G_{3}$ कांतिं त्वं

उत्तमाङ्गैर्नृसिंहानां नृसिंहास्तस्तरुर्महीम् ॥ ३
अर्धचन्द्रैस्तथा भल्लैः क्षुरप्रैरसिपट्टिशैः ।
परश्वधैश्चाप्यकृन्तन्नुत्तमाङ्गानि युध्यताम् ॥ ४
व्यायतायतबाहूनां व्यायतायतबाहुभिः ।
व्यायता बाहवः पेतुश्छिन्नमुष्टयायुधाङ्गदाः ॥ ५
तैः स्फुरद्भिर्मही भाति रक्ताङ्गुलितलैस्तदा ।
गरुडप्रहतैरुग्रैः पञ्चास्यैरिव पन्नगैः ॥ ६
हयस्यन्दननागेभ्यः पेतुर्वीरा द्विषद्धताः ।
विमानेभ्यो यथा क्षीणे पुण्ये स्वर्गसदस्तथा ॥ ७
गदाभिरन्यैर्गुर्वीभिः परिघैर्मुसलैरपि ।
पोथिताः शतशः पेतुर्वीरा वीरतरै रणे ॥ ८
रथा रथैर्विनिहता मत्ता मत्तैर्द्विपैर्द्विपाः ।

C. 8. 449
B. 8. 12. 9
K. 8. 9. 9

---

गंधतः (sic) (for कान्तिस्विङ्गन्धतः). Dn1 कांतिं ब्रिश्रांतिसायकाः. — $^{d}$) B3 ततरुर्; Da1 D5 त्रस्तरुर्; D4 (before corr. as in text) संस्तरुर्; Ca.c तस्तरुर् (as in text). K4 T1 मही (for महीम्). K3 नृसिंहानांसुरुर्महीं (sic); D1 नृसिंहास्वतरुन्महीं (sic). T1 नृसिंहैवृततामही (sic); T3 G3 आवृता प्रतता मही; G1.2 आवृता पतितैर्मही; M नृसिंहैः प्रतता मही.

4 $^{a}$) D8 om. अर्धं (cf. v. l. 3). T2 तदा (for तथा). K1 वल्वैः (for भल्लैः). — $^{b}$) G2 अपि (for असि-). K1 V1 B1 T2 असिपट्टिसैः; D5 °पट्टिशै; D6 T1.3 G M °पट्टसैः (for °पट्टिशैः). — $^{c}$) Da1 Dn1 D1.5.8 परस्वधैश्च; D6 G2 परश्वथैश्च (for परश्वधैश्च). K2 चाप्यकृंतान्; D4.8 चाप्यकृतन्; T1 चापकृंतन्; G1 चापि कृत्तान्; G2 चापक्रांतन्; G3 चालकृंतन्; M चान्व(M1 °व)कृंतन् (for चाप्यकृन्तन्). K1 परश्वधेश्चापिकृतुर् (sic); B3 परश्वधैवकृत्यंत; T3 परश्वधैश्चापहृतानि. G1 आत्तमांगानि (for उत्तमाङ्गानि). B5 देहिनां (for युध्यताम्). G2 उत्तमांगश्चियुध्यता. — After 4, S (except T2) reads $8^{ab}$.

5 $^{a}$) Ś2 व्यायत्तायतबाहूनां; K3 D2 व्यायता युत°; Da1 D1.5 व्यायता यत्र बाहूनां. — $^{b}$) Ś2 व्यायत्तायत्तबाहुभिः; K4 व्यायत्तायत°; Da1 D1.5 व्यापृता यत्र बाहुभिः. Ca.c cite व्यायताः and आयताः. — $^{c}$) K4 व्यायत्ता; D8 व्याहता; Ca.c व्यायता (as in text). K4 बहवः (for बाहवः). V1 B1–3 Da1 Dn1 D1.3–7 T G3 M बाहवः पातिता रेजुः; B4.5 D2 G1 बा(D2 ब)हवः पतिता रेजुः; G2 बाहवः पातितान्तृजुः (sic). Ca.c cite पतिताः. — $^{d}$) Ś1 K1.2.4 छिन्नमुष्ट्यायुधागदाः (K4 °दा); V1 B1–3.5 Da1 D1–7 धरण्यां सायुधां(D2 °धा)गदाः (B2.3 D3.4 °दैः); B4 धरण्यां सांगदायुधाः; Dn1 द्धरणां रुधिरोक्षिताः; S सांगदा रुधिरोक्षिताः (G1 °ता; G2 °तः).

6 $^{a}$) Da1 D1.5 क्षुरद्भिर् (for स्फुरद्भिर्). K3 गृहीताभि- (for मही भाति). — $^{b}$) T1 रक्तांगुळि°. V1 B D (except D6.8) S तथा (for तदा). — $^{c}$) K3 गरुडप्रहृतिभिर् (hypermetric); K4 B5 Dn1 D2.7 °प्रहितैर्; B2 °प्रहैरर्; B4 °प्रहृतैर्; D1 °प्रपतैर्; D5 °प्रहृतेर् (for गरुडप्रहतैर्). D3 गरुडप्रहितौ तुग्रैः; T1 गुरुप्रहारतो रुग्णैः; T2 गुरुप्रहरणोपेतैः; G1.2 गरुडप्रहरारुग्णैः (G2 °णैः); M गरुडप्रहारतो रुग्णैः (hypermetric). — $^{d}$) V1 पांचास्यैर् (for पञ्चास्यैर्). B (except B1) Da1 D1.3–5.7 पंचा(D3 °श्चा)स्यैरु(D3 °तु)रगैरिव.

7 $^{a}$) K1 हयज्ञस्यंदनागेभ्यः (sic); V1 B2–5 Da1 D1–7 T1.3 G M द्विरद(B2 °दा; B5 Da1 T3 °दः)स्यंदनाश्वे(T1 °श्वि)भ्यः; B1 विरदस्यंदनाश्रेभ्यः. — $^{b}$) K3 द्विपद्धताः; G2 भिषग्घिताः (for द्विषद्धताः). — $^{c}$) K1 विमाणेभ्यो. Dn1 S पुण्ये (for क्षीणे). K3 क्षीणे पुण्ये विमानेभ्यो. — $^{d}$) Dn1 T2.3 क्षीणे (for पुण्ये). K3 यथा स्वर्गसदस्तयः; D6 पुण्ये स्वर्गसदो यथा; T1 क्षीणे स्वर्गफला यथा; G1.3 क्षीणे स्वर्गपदात्तथा; G2 क्षीणे पुण्यपदास्तथा; M क्षीणे स्वर्गफले तथा (M2 यथा).

8 T1.3 G M read $8^{ab}$ after 4. — $^{a}$) S2 K4 गदाभिरतिगुर्वीभिः; K3 V1 B Da1 D1.3.4.7 T2.3 G M3 गदाभिरन्ये गु°; D2.6 गदाभि(D6 °भी)रत्न°. — $^{b}$) T1.3 G1.3 मुष्टिभिर्; G2 यष्टिभिर्; M1 उषिभिर्; M2.4 ऋष्टिभिर्; M3 दृष्टिभिर् (for परिघैर्). Ś2 K1 मुसुलैर्; K3 Dn1 D1.2.4.8 मुशलैर्; B2.3 मुषलैर्. — $^{c}$) K1 पोषिताः; K3 योधिताः; T1.3 G1.2 M1 प्रेषिताः; T2 पातिताः; G3 प्रोषिताः; M2–4 प्रोत्कृत्ताः (for पोथिताः). Ś2 शतशाः; S (except T2) शतधा (for शतशः). — $^{d}$) Ś K1.2.4 B2 Da1 D1.5 वीरतरे (for वीरतरै). T1.3 G1 वीरा वी(G1 धी)रैः शितैः शिरैः; G2 वीरवीरवरैः शितैः; G3 M वीरा वीरशतैः (M2–4 °रैः) शितैः.

9 $^{a}$) Ś K1.4 D2 तथा (for रथा). B Da1 D1.3–5.7 विमथिता; D2 विनिहिता; M3 विनिहतां (for विनिहता). — $^{b}$) D5 मत्ता मत्तौ; T1.3 G M प(M2 पा)तिताश्च (for मत्ता मत्तैर्). K3 B1.2.4.5 Da1 D1–4.7.8 S (except T2) द्विपा द्विपैः (by transp.); V1 D6 महाद्विपैः; D5 द्विपैर्द्विपा द्विपैः (for द्विपैर्द्विपाः). Cc cites मत्तैर्द्विपैर् (as in text). — $^{c}$) K1 सादिना; K3 G2 सादिताः (for सादिनः). V1 सादिनश्चापि; B1 D2.6 सादिभिश्चापि. D3 T3 G1.3 सादिभिः सादिनश्चैव. — $^{d}$) V1 परमसंयुगे (for °संकुले).

C. 8. 449
B. 8. 12. 9
K. 8. 9. 9

सादिनः सादिभिश्चैव तस्मिन्परमसंकुले ॥ ९
रथा वररथैर्नागैरश्वारोहाश्च पत्तिभिः ।
अश्वारोहैः पदाताश्च निहता युधि शेरते ॥ १०
रथाश्वपत्तयो नागै रथैर्नागाश्च पत्तयः ।
रथपत्तिद्विपाश्चाश्वैर्नृभिश्चाश्वरथद्विपाः ॥ ११
रथाश्वेभनराणां च नराश्वेभरथैः कृतम् ।
पाणिपादैश्च शस्त्रैश्च रथैश्च कदनं महत् ॥ १२
तथा तस्मिन्बले शूरैर्वध्यमाने हतेऽपि च ।
अस्मानभ्यागमन्पार्था वृकोदरपुरोगमाः ॥ १३
धृष्टद्युम्नः शिखण्डी च द्रौपदेयाः प्रभद्रकाः ।
सात्यकिश्चेकितानश्च द्रविडैः सैनिकैः सह ॥ १४
भृता वित्तेन महता पाण्ड्याश्चौड्राः सकेरलाः ।
व्यूढोरस्का दीर्घभुजाः प्रांशवः प्रियदर्शनाः ॥ १५
आपीडिनो रक्तदन्ता मत्तमातङ्गविक्रमाः ।
नानाविरागवसना गन्धचूर्णावचूर्णिताः ॥ १६
बद्धासयः पाशहस्ता वारणप्रतिवारणाः ।

---

10 $^a$) $V_1$ $B_{1.2.4.5}$ D S रथैर्; $B_3$ रथे (for रथा). Ś$_2$ $K_4$ रथवरैर्; $V_1$ $B_5$ $Da_1$ $D_{1.5}$ $T_{2.3}$ $G_{1.3}$ $M_{2-4}$ नागा रथा; $B_1$ नागा रथैर्; $B_{2-4}$ $Dn_1$ $D_{2-4.7.8}$ $T_1$ $M_1$ नरा रथा; $D_6$ नरा रथो; $G_2$ नागा रथो (for वररथैर्). $K_3$ रथैर्नररथा नागा. — $^b$) $B_4$ अथारोहस्तु; $Dn_1$ अथारोहाश्च-; $D_8$ अथारोहाश्च; $T_2$ अश्वारोहाश्च- (for अश्वारोहाश्च). Ś $K_{2.4}$ सादिभिः (for पत्तिभिः). — $D_{1.8}$ om. (hapl.) $10^c$–$11^b$. — $^c$) $Dn_1$ अश्वारोहाः पदातैश्च.

11 $K_1$ om. 11. $D_{1.8}$ om. $11^{ab}$ (cf. v. l. 10). — $^a$) $D_6$ रथाश्च; $T_2$ तथाश्च-; $G_2$ गजाश्च- (for रथाश्व). — $^b$) $K_3$ $V_1$ $B_{1.5}$ $D_2$ रथनागैश्च; $B_3$ रथाश्वे**; $D_6$ रथा नागैश्च; $T_1$ $M_1$ रथैर्नागैश्च; $T_2$ रथैर्नागाश्च-; $G_{1.2}$ अश्वैर्नागैश्च (for रथैर्नागाश्च). $B_{1.5}$ $D_6$ पत्तियः; $B_3$ पत्तिभिः (for पत्तयः). Ś$_2$ $K_4$ नागाश्च पत्तिभिस्तथा; $B_{2.4}$ $Da_1$ $D_{3-5.7}$ $T_3$ $G_3$ रथाश्वेभाश्च पत्तिभिः. — $^c$) $V_1$ °द्विपाश्चैश्च; $B_4$ °द्विपाश्चान्यैर्; $D_6$ $T_{1.2}$ (before corr.) °द्विपाश्चैव; $G_1$ °द्विपाश्चाश्वैर्; $G_2$ °द्विजाश्चाश्वैर्; $M_1$ °द्विपाश्चाश्वः (for °द्विपाश्चाश्वैर्). — $^d$) $V_1$ $B_{1-3}$ $Da_1$ $D_{1-3.5.7}$ रथैश्चापि नर($Da_1$ $D_{1.5}$ रथ)-द्विपाः; $B_4$ अश्वैश्चापि नरद्विपाः; $D_4$ रथैश्चापि वरद्विपाः; $D_8$ रथैश्चाश्वनरद्विपाः.

12 $^a$) $B_{2-4}$ $Da_1$ $Dn_1$ $D_{1-5.7.8}$ T $G_{2.3}$ तु (for च). $K_3$ रथाश्वेयुनराराणां (sic); $G_1$ रथाश्वोभनराणां तु. — $^b$) $B_1$ नराश्वेभनरैः; $D_8$ (by corr.) $T_{2.3}$ $G_{2.3}$ रथाश्वेभनरैः ($T_3$ $G_2$ °राः; $G_3$ °रा); $G_1$ रथाश्वोभनराः (for नराश्वेभरथैः). $D_2$ वृता; $D_6$ वृतं; $D_8$ कृत; $T_3$ G कृताः (for कृतम्). $K_3$ केचन सैन्यं रथैर्वृतम् (hypermetric). — After $12^{ab}$, $Dn_1$ $T_2$ ins.:

78* तथाश्वनरनागानामन्योन्यं संकुलं बभौ ।

[$Dn_1$ रथाश्व-.]

— $^c$) $K_1$ शस्त्रैश्च (for शस्त्रैश्च). $D_6$ पाणिपादै रथैश्चैव. — $^d$) $D_6$ शस्त्रैश्च; $T_1$ खड्गैश्च; $G_1$ शरैश्च (for रथैश्च). $T_1$ कृतं (*for* महत्).

13 $^a$) $K_1$ बलैः; $B_5$ रणे; $D_2$ हते (for बले). — $^b$) $V$ $B_1$ $D_6$ हन्यमाने; $T_3$ $G_{2.3}$ युध्यमाने (for वध्यमाने). $K_4$ हितेपि च; $Dn_1$ हतेपि व (for हतेऽपि च). — $^c$) Ś$_1$ $D_{2.8}$ अभ्यागमत्; $K_1$ अभ्यगमन्; $K_3$ अभ्यागमत्; B (except $B_1$) $Da_1$ $Dn_1$ $D_{1.3-5.7}$ $T_3$ $G_{2.3}$ M अभ्याययुः; $T_1$ अभ्ययुः; $G_1$ नभ्ययुः (for अभ्यागमन्). $T_2$ पार्थौ (for पार्था).

14 $^c$) $D_7$ reads the portion from कि (in $14^c$) up to मात (in $16^b$) in marg. $K_2$ चेकितानांश्च (for चेकितानश्च). — $^d$) Ś $K_2$ $T_1$ G द्रमिडैः; $K_3$ प्रमित्रैः; $V_1$ द्राविलैः; $B_{1-3.5}$ $Da_1$ $D_{1-5.7}$ द्राविडैः; $D_6$ द्रावितैः; $D_8$ द्रभिडैः; $T_2$ $M_{2-4}$ द्रामिलैः; $T_3$ $M_1$ द्रमिलैः (for द्रविडैः). $K_4$ शौनिकैः; $G_1$ सरिकैस् (for सैनिकैः).

15 $D_7$ reads 15 on marg. — $^a$) $K_3$ नृवा (sic); $V_1$ B $Da_1$ $D_{1-6.8}$ $T_1$ वृता; $D_7$ $T_2$ (*sup. lin.*).3 $G_3$ धृता; $G_2$ भ्राता (for भृता). $K_3$ चित्तेन; $V_1$ $Da_1$ $D_{1.2.5.6}$ वृंदेन; B $D_{3.4.7}$ व्यूहेन; $T_1$ सैन्येन (for वित्तेन). $D_2$ सहसा (for महता). — $^b$) Ś$_2$ $K_{2.4}$ चोंड्राः; $K_1$ चोड्यास; $K_3$ चोडाः; $V_1$ $B_{2-5}$ $Da_1$ $D_{1.3-7}$ $T_3$ $G_3$ चोलाः; $Dn_1$ चोंद्राः; $D_8$ चौडाश्च; $T_{1.2}$ $G_1$ $M_1$ चोळाः (for चौड्राः). $K_1$ (by corr.) सकेवलाः; $K_4$ सकेरला; $T_{1.2}$ $G_1$ $M_1$ सकेरळाः (for सकेरलाः). $B_1$ पांड्याश्चांडालकेरलाः; $D_2$ पांड्या रथेंद्राकेरलाः; $G_2$ $M_{2-4}$ पांड्याश्चोळाश्च केरळाः. — $^c$) $K_3$ दीर्घभुजः; $K_4$ $D_1$ दीर्घभुजा (for दीर्घभुजाः). — $^d$) $K_1$ प्रंशवः; $K_3$ प्रांशव; $B_1$ प्रांसवः; $T_1$ पांशवः (for प्रांशवः). $K_1$ प्रियदर्शना; $V_1$ B D S पृथुलोचनाः (for प्रियदर्शनाः).

16 $D_7$ reads up to मत्तमात on marg. — $^a$) $K_1$ अपीडिनं; $K_3$ आपीडनो; $D_{1.3.8}$ (before corr.) आपीडितो; $D_6$ अखंडिता (for आपीडिनो). $G_2$ नक्तदंता (for रक्तदन्ता). — $^b$) $K_1$ मधुमातंगविक्रमः (sic). — $^c$) $Dn_1$ नानावीरांगवसना; $D_6$ नानाविधांगवसना; $C_0$ नाना-

महान्व्यतिकरो रौद्रो योधानामन्वदृश्यत ।
कर्णसायकनुन्नानां हतानां निशितैः शरैः ॥ ११६
ते वध्यमानाः समरे सूतपुत्रेण सृञ्जयाः ।
तमेवाभिमुखा यान्ति पतंगा इव पावकम् ॥ ११७
तं दहन्तमनीकानि तत्र तत्र महारथम् ।
क्षत्रिया वर्जयामासुर्युगान्ताग्निमिवोल्बणम् ॥ ११८

हतशेषास्तु ये वीराः पाञ्चालानां महारथाः ।
तान्प्रभग्नान्द्रुतान्कर्णः पृष्ठतो विकिरञ्छरैः ।
अभ्यधावत तेजस्वी विशीर्णकवचध्वजान् ॥ ११९
तापयामास तान्बाणैः सूतपुत्रो महारथः ।
मध्यंदिनमनुप्राप्तो भूतानीव तमोनुदः ॥ १२०

इति श्रीमहाभारते कर्णपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥

## १८

संजय उवाच ।
युयुत्सुं तव पुत्रं तु प्राद्रवन्तं महद्बलम् ।
उलूकोऽभ्यपतत्तूर्णं तिष्ठ तिष्ठेति चाब्रवीत् ॥ १
युयुत्सुस्तु ततो राजञ्शितधारेण पत्रिणा ।

C. 8. 924
B. 8. 25. 2
K. 8. 16. 2

---

116 B1 om. 116^ab (cf. v. l. 115). — ^a) Ś2 Da1 D1.5 महा- (for महान्). — ^b) M यौधानाम्. K3 B1.5 Dn1 D2–4.7.8 अन्वपद्यत; V1 समपद्यत; B3 तत्र भारत; Da1 D1.5 अनुदृश्यते; D6 अनुपद्यत (for अन्वदृश्यत). — ^c) B2 कर्णसायकन्वन्यानां (sic). — ^d) K3 V1 B1–3 Dn1 D1.5.6.8 T2.3 G M वध्यतां; B4.5 Da1 D2–4.7 T1 युध्यतां (for हतानां). V1 B (except B2) Da1 D1–5.7 च शितैः (for निशितैः).

117 ^b) K1 D1 G1 संजयाः. — ^c) K3 B D3.4.6–8 [अ]भिमुखं. — ^d) B2 पतंगम्.

118 ^b) K3 B2 Dn1 महारथान्; D8 °रथाः. — ^c) K3 Dn1 D8 S अपरे; B1 क्षितिमा- (for क्षत्रिया). Da1 तर्जयामासुर्. — ^d) K3 D2 T2 युगांताग्निर्. D2 इवोज्वलन्; D6 इवोज्वलं. Ca cites उल्बणम् (as in text).

119 ^a) B1 ततः शेषास्तु; D5 हतशेषासु (sic) (for °शेषास्तु). G2 च (for तु). V1 ते (for ये). — ^b) A few MSS. पंचालानां. B1 महारथं; D5 °रथः; S रथव्रजाः (M1 रथं व्रजान्) (for महारथाः). — ^c) K1 तु तान्; V1 Dn1 D2.6 द्रुतं; Da1 D1.5 हयान् (for द्रुतान्). Ś K2.4 वीरान्; K1 वीराः; B1.2.4.5 Da1 D1.3–7 वीरः (for कर्णः). B3 तान्प्रभग्नहयान्वीरान्. — ^d) Ś K2 V1 Dn1 व्यकिरत्; K4 व्यकिरून् (sic); D1.3 विकिरत्; T1 विकिरं (for व्यकिरत्). S शरान् (for शरैः). — ^e) V1 S अभ्यद्रवत (T2 °पद्यत); D6 °द्रवंत. — ^f) K3 B3 S (except G3) विकीर्णकवचध्वजान्.

120 ^a) V1 Dn1 D8 पातयामास; B2 अर्पयामास (for ताप°). K3 बाणान्. S (except T2) तापयन्स(M1–3 °न्स)मरे बाणैः. — ^b) V1 B5 D2–4.6.7 महाबलः (for °रथः). — ^c) K4 मध्यमदिनमनुप्राप्तो (hypermetric). — ^d) Ś2 K2.4 भीतानिव; M3 भूतानिव. K3 ग्रीष्मकाले यथा रविः.

Colophon. — *Adhy. name:* T1.2 नकुलपराजयः. — *Day of Karṇa's Generalship:* Ś2 K4 प्रथम(K4 °मे)युद्धदिवसे. — *Adhy. no.* (figures, words or both): Ś1 (marg.) 18; Ś2 T2 17 (as in text); B1.2.4.5 Da1 D3.5.6 24; D4 (*sec. m.*) 25; T1.3 G M 15.

## 18

1 Before the ref. G2 ins. श्रीकृष्णाय नमः. — ^a) B2 D4.6 युयुत्सुस् (for युयुत्सुं). B1.2.4 Da1 D1.3–5.7 G3 पुत्रस्य; D8 पुत्रं च (for पुत्रं तु). — ^b) K3.4 V1 B D T2 G3 M द्रावयंतं; T1 वारयंतं; T3 G1 तापयंतं; G2 धावयंतं (for प्राद्रवन्तं). K3 Da1 Dn1 D1.5.8 T2 महाबलं; B5 D3.4.6.7 बलं महत् (by transp.); T1.3 G M वरूथिनीं. — ^c) Ś K4 V1 B1.5 D2–4.6.7 न्यपतत्; K1 [ऽ]भ्यसृतत् (sic); K3 व्यपतत्; B3 [ऽ]प्यपतत् (for ऽभ्यपतत्). T1 उलूको वारयामास. — ^d) D5 om. the first तिष्ठ.

2 Ś K1.2.4 om. (? hapl.) 2. — ^a) V1 B2.5 D2–4.7 च (for तु). Dn1 त्वरितो (for तु ततो). T2 M2–4 तदा; M1 तथा (for ततो). V1 राजा. — ^b) V1 G2 शतधारेण;

C. 8. 994
B. 8. 25. 2
K. 8. 16. 2

उलूकं ताडयामास वज्रेणेन्द्र इवाचलम् ॥ २
उलूकस्तु ततः क्रुद्धस्तव पुत्रस्य संयुगे ।
क्षुरप्रेण धनुश्छित्त्वा ताडयामास कर्णिना ॥ ३
तदपास्य धनुश्छिन्नं युयुत्सुर्वेगवत्तरम् ।
अन्यदादत्त सुमहच्चापं संरक्तलोचनः ॥ ४
शकुनिं च ततः षष्ट्या विव्याध भरतर्षभ ।
सारथिं त्रिभिरानर्छत्तं च भूयो व्यविध्यत ॥ ५
उलूकस्तं तु विंशत्या विद्ध्वा हेमविभूषितैः ।
अथास्य समरे क्रुद्धो ध्वजं चिच्छेद काञ्चनम् ॥ ६
स च्छिन्नयष्टिः सुमहाञ्शीर्यमाणो महाध्वजः ।
पपात प्रमुखे राजन्युयुत्सोः काञ्चनोज्ज्वलः ॥ ७
ध्वजमुन्मथितं दृष्ट्वा युयुत्सुः क्रोधमूर्छितः ।
उलूकं पञ्चभिर्बाणैराजघान स्तनान्तरे ॥ ८
उलूकस्तस्य भल्लेन तैलधौतेन मारिष ।
शिरश्चिच्छेद सहसा यन्तुर्भरतसत्तम ॥ ९
जघान चतुरोऽश्वांश्च तं च विव्याध पञ्चभिः ।
सोऽतिविद्धो बलवता प्रत्यपायाद्रथान्तरम् ॥ १०
तं निर्जित्य रणे राजन्नुलूकस्त्वरितो ययौ ।

---

D3 सित° (for शित°). — $^c$) T3 G तापयामास (for ताड°). — $^d$) Da1 D1.5 इवाचलः. K3 D3 वज्रेणेव शतक्रतुः; V1 B1.3 Dn1 D3.6 °णे(D6 °णै)व महाबलं; B4.5 D2.4.7 S °णेव महाचलं (T3 °बलः).

3 $^b$) T3 G मारिष (for संयुगे). — $^c$) S (except T2) सुतीक्ष्णेन (for धनुश्छित्त्वा). — $^d$) T1.3 G M धनुश्चिच्छेद संयुगे (T1 M मारिष).

4 K1 om. 4$^a$–5$^a$. — $^a$) M3 तदापास्य. — $^b$) B3 बलवत्तरं; T1 वेगवत्तरः. — $^c$) Da1 D1 अन्यदादाय; G2 °थादत्त (for °दादत्त). D6 सुमहा- (for सुमहच्च). — $^d$) B3 कोप- (for चापं).

5 K1 om. 5$^a$ (cf. v. l. 4). — $^a$) V1 उलूकस्; B4.5 D2.6 उलूकं; T1 शकुनीं; G2 शकुनिं. V1 B (except B2) D S तु (for च). B2 T3 G चतुःषष्ट्या (for ततःषष्ट्या). — $^b$) K3 Dn1 D3 पुरुषर्षभः; B1 G1 भरतर्षभः. — $^d$) T3 G1.3 तु (for च). Ś2 [ऽ]भ्यविध्यत; Ś2 (*sup. lin.*) K4 D3.4.7 न्यवि°; K3 व्यवध्यत; V1 B2.4.5 Da1 Dn1 D1.2.5.6 T3 G3 M1 [ऽ]प्यवि°; B3 [ऽ]भ्यधावत; T1 M2–4 ह्यविध्यत; T2 [ऽ]प्यतिष्ठत; G2 [ऽ]प्ययुध्यत (for व्यविध्यत). B1 तं भूयोप्यविविध्यत (sic).

6 $^a$) K3 स तु; B3 तेक- (sic); T3 G पंच-; M1 तत्तु (for तं तु). — $^b$) Ś2 हेम*भूषितैः; K1 हेम ** षितैः; V1 स्वर्णविभूषणैः; B1.5 D2–4.6.7 S स्वर्ण(T1.3 G M रुक्म)विभूषितैः. — $^c$) T2 राजन् (for क्रुद्धो). G2 तथा युयुत्सोः समरे. — $^d$) D1 ध्वजश्च (for ध्वजं).

7 $^a$) T G सं(G1 वि)च्छिन्नयष्टिः. Da1 D1.5 सुमहत् (for सुमहान्). — $^b$) T1 छिद्यमाणो (for शीर्यमाणो). — $^c$) K1 समरे; T3 G1.2 प्राङ्मुखो (for प्रमुखे). — $^d$) Dn1 युयुत्सोः (sic); T1 °युत्सुः. K4 कांचनो ज्वलन्; B1.3–5 D3.4.7 T2 °नध्वजः; B2 D2.6 °नप्रभः; T1.3 G M विश्रुतो रथात् (for काञ्चनोज्ज्वलः).

8 $^d$) T2 निजघान (for आज°). Ś2 स्तनांतरैः; K2 स्तनातुरे (sic).

9 For the repetition of 9 in D2, see below. — $^a$) Ś K1.2.4 B Da1 D1.3–5.7 समरे; D6 फल्लेन (for भल्लेन). — $^b$) V1 तिलधौतेन. K3 मारिषः; T1 भारत. — V1m T2 repeat 9$^{cd}$, after 140*. — $^c$) Da1 D1.5 धनुश्च (for शिरश्च). K4 B5 D3.4.7 भल्लेन; B2 D2 (both times) S (T2 second time) समरे (for सहसा). K3 V1 (first time) Dn1 D6.8 धनुश्चिच्छेद समरे. — $^d$) V1 (second time) जंतुर्; B1.3 यांतुर् (for यन्तुर्). K1 T3 G3 M3 भारतसत्तम. K3 D3 शरैः क्रोधसमन्वितः; V1 (first time) Da1 Dn1 D1.2 (both times).5.6 T2 (first time) स्वर्णपुंखेन राजता. — After 9, V1 B (except B3) D (except D3) T2 ins.:

140* तच्छिन्नमपतद्भूमौ युयुत्सोः सारथेस्तदा।
तारारूपं यथा चित्रं निपपात महीतले।

[(L. 1) V1 Da1 Dn1 D1.2.5.6 धनुरुत्तमं (for सारथेस्तदा). — After line 1, D2 repeats stanza 9. — (L. 2) V1 तथा (for यथा).]

Dn1 cont:

141* यन्तुश्चिच्छेद समरे शिरः क्रोधसमन्वितः।

10 $^a$) T1 चतुरश्चाश्वांस्; G2 चतुरोस्याश्वांस्. — $^b$) B1 तथा (for तं च). K3 D3 पत्रिभिः; B2 D1 सप्तभिः (for पञ्चभिः). — $^c$) D3 सोपि विद्धो. — $^d$) Da1 D1.5 प्रत्युपायाद्. Ś1 K2 रथंतरं.

11 $^a$) S (except T2) transp. तं and निर्जित्य. — $^b$) Ś2 K1.2.4 T3 G3 त्वरितं. — $^c$) A few MSS. पंचालान्. — $^d$) T1 विसृजन्; T3 G M विकिरन् (for विनिघ्नन्). K1 विनिघ्नंति शितैः शरैः.

पाञ्चालान्सृञ्जयांश्चैव विनिघ्नन्निशितैः शरैः ॥ ११
शतानीकं महाराज श्रुतकर्मा सुतस्तव ।
व्यश्वसूतरथं चक्रे निमेषार्धादसंभ्रमम् ॥ १२
हताश्वे तु रथे तिष्ठञ्शतानीको महाबलः ।
गदां चिक्षेप संक्रुद्धस्तव पुत्रस्य मारिष ॥ १३
सा कृत्वा स्यन्दनं भस्म हयांश्चैव ससारथीन् ।
पपात धरणीं तूर्णं दारयन्तीव भारत ॥ १४
तावुभौ विरथौ वीरौ कुरूणां कीर्तिवर्धनौ ।
अपाक्रमेतां युद्धात्तौ प्रेक्षमाणौ परस्परम् ॥ १५
पुत्रस्तु तव संभ्रान्तो विवित्सो रथमाविशत् ।
शतानीकोऽपि त्वरितः प्रतिविन्ध्यरथं गतः ॥ १६

सुतसोमस्तु शकुनिं विव्याध निशितैः शरैः ।
नाकम्पयत संरब्धो वार्योघ इव पर्वतम् ॥ १७
सुतसोमस्तु तं दृष्ट्वा पितुरत्यन्तवैरिणम् ।
शरैरनेकसाहस्रैश्छादयामास भारत ॥ १८
ताञ्शराञ्शकुनिस्तूर्णं चिच्छेदान्यैः पतत्रिभिः ।
लघ्वस्त्रश्चित्रयोधी च जितकाशी च संयुगे ॥ १९
निवार्य समरे चापि शरांस्तान्निशितैः शरैः ।
आजघान सुसंक्रुद्धः सुतसोमं त्रिभिः शरैः ॥ २०
तस्याश्वान्केतनं सूतं तिलशो व्यधमच्छरैः ।
स्यालस्तव महावीर्यस्ततस्ते चुक्रुशुर्जनाः ॥ २१
हताश्वो विरथश्चैव छिन्नधन्वा च मारिष ।

C. 8. 1015
B. 8. 23. 23
K. 8. 16. 23

12 b) B3 श्रुतयर्म-; Dn1 D6 T1 M °वर्मा; T2 शितवर्मा. K4 ततस्; M1 श्रुतस् (for सुतस्). — c) T1 न्यश्वसूतं (for °सूत-). — d) V1 D2.6 असंभ्रमात्; B Da1 Dn1 D1.3–5.7 S °भ्रमः.

13 a) D2 हताश्वेति (for °श्वे तु). G1 रथो. D6 [ऽ]निच्छन् (sic); T2 (before corr.) तस्मिन् (for तिष्ठन्). — b) Ś2 शतानेको; K1 °नीकं. V1 B5 D2–4.6.7 S महारथः (for °बलः). — d) B3 D6 T2 पुत्राय; D1 पुत्रश्च (for पुत्रस्य). B3 भारत (for मारिष).

14 a) B2 G1 M1 स; T2 सो (for सा). V1 B2.3.5m D6 हत्वा (for कृत्वा), and तस्य (for भस्म). — b) S (except T2) हयान्सारथिमेव च. — cd) Ś K1.2 D8 दारयंती च (for °यन्तीव). S (except T2) ध्वजं चैव पताकां च (G2 °कश्च) मेदिनीमन्वपद्यत.

15 a) V1 शूरौ (for वीरौ). D6 तावुभौ भरतौस्तौ तौ (sic). — c) Ś2 K3 V1 B Da1 Dn1 D1–7 T2 व्यपाक्रमे(D1 °म)तां; K1 अपक्रमेतां; T1.3 G M व्यपक्रमेतां. Ś K1.2.4 Dn1 D2.6 युद्धाय; K3 V1 B1.2.4 D3.4.7.8 S °द्धात्तु; B3 °द्धास्तु; B5 m °द्धात्तौ. — d) Ś2 प्रेक्षमानौ; Da1 Dn1 D1.5.6 प्रेक्ष्यमाणौ; T2 वीक्ष°.

16 Da1 D1.5 om. 16ab. — b) Ś2 K3.4 V1 B2 G1.3 विवत्सो; K1 विवित्स-; B1.3–5 Dn1 D2–4.6.7 विविंशो; T1 विदित्सो; T2 विरथो; G2 M2–4 युयुत्सो. V1 Dn1 D3.4.6.7 T2 आरुहत्; D2 आरुहे; T1.3 G M आव्रजत् (for आविशत्). — c) D8 त्वरितं; S (except T2) राजेंद्र (for त्वरितः). — d) D8 प्रतिवंध्य°; G2 प्रत्यविंध्य° (for प्रतिविन्ध्य°).

17 a) K3 D2.6 T1 G2 श्रुतसोमं तु (D6 °मश्च); K4 स्तुतसौमस्तु; V1 B Da1 Dn1 D1.3–5.7.8 T2.3 G1.3 M सु(B1 सू)तसोमं तु (V1 च). K3 V1 B (except B3) D S शकुनिर् (for शकुनिं). — b) V1 T3 G3 विद्ध्वा तु; B5 Dn1 D3.4.7 T1.2 G1.2 M विद्ध्वा सु-; D2.6 विद्ध्वा तं (for विव्याध). — T3 G1.3 repeat 17cd after 20. — c) D6 नाकंपत सु-; G2 नाकंपयच्च (for °यत). Ś2 K4 B1.5 D3–5.7 T1.3 G M2–4 संक्रुद्धो; Da1 D1 संरब्धौ; M1 संहृष्टो (for संरब्धो). — d) Ś K3 V1 B1.3.5 Da1 D1–6 T2 G2.3 M वार्यौघ; B4 वार्यौघैर्; T1 वाय्वोव (for वार्योघ). K3 पर्वतान्.

18 a) K3 स्तुत°; D6.8 T1 G2 श्रुत° (for सुत°).

19 a) S तस्य (for तूर्णं). — b) D3 चिच्छेदान्य-. S (M1 partly damaged) तूर्णं चिच्छेद (T3 G विव्याध) पत्रिभिः. — c) K3 लघ्वस्त्र-. Da1 D1.5 T1.3 G लघुहस्तश्चि(Da1 °चि)त्रयोधी.

20 a) D3 वापि (for चापि). — b) Da1 शराद्यान्; D5 शरांस्तन्; T1 शरांश्च (for शरांस्तान्). — D8 T1 om. (hapl.) 20cd. — c) D2 व्याजघान (for आज°). S (T1 om.) ततः क्रुद्धः (for सुसंक्रुद्धः). — d) K3 Dn1 D6 श्रुतसोमं. — After 20, T3 G1.3 repeat 17cd.

21 a) S स्यंदनं केतुं (for केतनं सूतं). — c) K3 D3 शालस्; V1 B1–4 Da1 D1.3.7 श्यालस्; G2 तस्यास् (for स्यालस्). K1 तत्र (for तव). Ś K1.2 B1.5 D3.4.6.7 महाराज; T2 °वीरस् (for °वीर्यस्). — d) B2 (marg.) तव (for ततस्). K1.3 V1 B D S उच्चु(M1 °च्च)क्रुशुर् (for ते चुक्रुशुर्).

C. 8. 1015
B. 8. 25. 23
K. 8. 16. 23

धन्वी धनुर्वरं गृह्य रथाद्भूमावतिष्ठत ।
व्यसृजत्सायकांश्चैव स्वर्णपुङ्खाञ्शिलाशितान् ॥ २२
छादयामासुरथ ते तव स्यालस्य तं रथम् ।
पतंगानामिव व्राताः शरव्राता महारथम् ॥ २३
रथोपस्थान्समीक्ष्यापि विव्यथे नैव सौबलः ।
प्रममृद्नंश्च शरांस्तांस्ताञ्शरव्रातैर्महायशाः ॥ २४
तत्रातुष्यन्त योधाश्च सिद्धाश्चापि दिवि स्थिताः ।
सुतसोमस्य तत्कर्म दृष्ट्वाश्रद्धेयमद्भुतम् ।
रथस्थं नृपतिं तं तु पदातिः सन्नयोधयत् ॥ २५
तस्य तीक्ष्णैर्महावेगैर्भल्लैः संनतपर्वभिः ।
व्यहनत्कार्मुकं राजा तूणीरं चैव सर्वशः ॥ २६
स च्छिन्नधन्वा समरे खड्गमुद्यम्य नानदन् ।
वैडूर्योत्पलवर्णाभं हस्तिदन्तमयत्सरुम् ॥ २७
भ्राम्यमाणं ततस्तं तु विमलाम्बरवर्चसम् ।

---

22 D1 om. (? hapl.) $22^{b}$–$24^{a}$. — b) V1 B5 (m as in text) D2–7 S छिन्नकेतुश् (for °धन्वा). K3 मरिषः. — c) Ś2 धन्ववरं; Da1 D6 धनुर्धरं (for °वरं). Ś1 ग्राह्य (for गृह्य). — d) K3 B1–4 Dn1 D8 ततो (for रथाद्). D4 S व्यतिष्ठत (for अतिष्ठत). D2.6 सरथाद(D6 °दि)-वतिष्ठत. — e) K3 B1 T1.2 व्यसृजन्; Da1 D5 विसृजत्. Ś2 सायकश्; B1 शायकांश्; M1 सायकाश्. M2–4 चापि (for चैव). — f) Ś2 D8 शिलासितान्.

23 D1 om. 23 (cf. v. l. 22). — a) V1 B Da1 Dn1 D2–7 छादयामास समरे (V1 च रथं; B3.4 Da1 D5 °स रथं). — b) Some MSS. श्या(or शा)लस्य. K1 ते रथं; V1 B1.3 Da1 D5 चाहवे; B4 संयुगे (for तं रथम्). — T3 om. $23^{c}$–$24^{d}$. — c) V1 B5 Dn1 D2–4.6.7 T2 शलभानाम् (for पतंगानाम्). K3 V1 B D (except D6; D1 om.) व्रातान्; G2 M4 व्रातं (for व्राताः). — d) K3 D2 शरव्रातान्. D5 महारथ; T2 महात्मनः; M3 महारथा. K3 V1 B Da1 Dn1 D3.4.7.8 श(B2 शू)रव्रातान्महारथः.

24 T3 om. 24 (cf. v. l. 23). D1 om. $24^{a}$ (cf. v. l. 22). — a) Ś2 K4 हस्तोपस्थान्; K1.3 V1 B D (D1 om.) रथोपगान् (for रथोपस्थान्). K3 समीक्ष्याथ; B1 °क्ष्येव; B3.5 D3.4.7 °क्ष्यैवं; B4 Da1 D5 °क्ष्यैव; D2 समासाद्य; D8 समीक्ष्यारिद् (for °क्ष्यापि). S (T3 om.) संछाद्यमानोपि दृढं. — b) Da1 D1.5 T2 विव्यधे. V1 विव्याधैनं च सौबलः. — c) K1 प्रमुद्यंश्च; K3 B Da1 Dn1 D1.3–5.7.8 T2 प्रममाथ (B4 °मथे); K4 प्रमध्नंश्च; D6 प्रमृद्यतुः; T1 M प्रामर्दत (M1 प्रमर्दतः); G1 प्राज्ञमर्द; G2.3 प्रममर्द (for °द्नंश्च). G1.3 नरांस्तत्र; G2 नरांश्चस्ताञ् (for शरांस्तांस्तान्). K3 तां तु; V1 B1.2.5 D3.4.6.7 तस्य; B3.4 Da1 Dn1 D1.5.8 T2 तांस्तु; T1 सर्वान्; M1 अस्तान् (for तांस्तान्). D2 प्रमृज्यांश्चुशरांस्तस्य. — d) S (except T2; T3 om.) शरजालैर्महारथः.

25 a) V1 ततस्रास्यंत; B3 तत्र तस्यांत; D5 G2 तत्र तुष्य-(G2 °ष्यं)त. T3 G2.3 M यौधाश्च. — b) T3 G चैव (for चापि). — c) Ś1 (*sup. lin.* as in text) K3 B2 D2.6.8 T1 श्रुत(B2 सूत)सोमस्य. G3 यत् (for तत्). — d) G1 दृष्ट्वाश्रेयमद्भुतम् (submetric). — e) B5 D2–4.7 शकुनिं; D6 शकुनिर्; T1 तु नृपं; G2 नृपतिस् (for नृपतिं). K3 D8 यत्तु नृपतिं (for नृपतिं तं तु). V1 Dn1 D2.6.7 T1.2 यस्तु; B1.4 यांतं; B2.3.5 यत्तं; Da1 D1.5 संतं; D3.4 G1.3 M यत्तु (for तं तु). — f) K1 B1 पदातिं; D2 पदातः. K1 स्सत्र योधयद् (sic); K3 B5 Dn1 D3.4.6–8 T1 G समयोधयत् (D6 °यन्); K4 M2–4 स न्ययोधयत्; B1 सयुयोधयत्; D2 समपोथयत् (for सन्नयोधयत्).

26 a) D6 नृपं (for तस्य). B3 भल्लैर्; T1 तीव्रैर् (for तीक्ष्णैर्). — b) B3 तीक्ष्णैः (for भल्लैः). — c) K1.3 व्यहरत्; V1 D2 व्याहन(D2 °र)त्; S (except G3) व्यधमत् (for व्यहनत्). K3 चैव; V1 B D T2.3 G1.2 M3 राजन्; M4 राज (for राजा). — d) K3 V1 B D S तूणीरांश् (for तूणीरं). B2 चापि (for चैव). G1 तूणीरांश्च सर्वशः (submetric).

27 a) T1.3 G1.2 M1.3 सं- (for स). B1.5 D3.4.7 विरथः (for समरे). — b) K3 खड्गप्रछस्य (sic); M2–4 °मुद्गृह्य (for °मुद्यम्य). K1 नानदम्; K3.4 नानदत्; V1 B1.2.4.5 Da1 Dn1 D1–7 T2 चानदत्; B3 नादयन्; D8 G2 नादयत् (for नानदन्). — c) Ś1 B D3.4.6.7 वैदूर्योत्पलवर्णाभं; V1 D1.2 T1.3 G M वैडूर्योत्पलपत्राभं (D2 °वर्णाभ-; T1 M2.4 °पत्राभ-; G3 °पत्रांगं); Da1 वैदूर्योत्पालपत्राभं. — d) Ś2 Dn1 हस्तिदंतमयं त्सरूं (Ś2 °दं); K3 °दंडमयं सरुं; V1 B1.5 D2–4.7 S दंतिदंतमय(D3 °यं)त्सरुं (D2 °शुभं); Da1 D1.5 हस्तिदंतसमत्सरुं (Da1 D5 °रं); D8 हस्तीदंतमयत्सरुं.

28 a) Ś K2.4 भ्राम्यमानस्; K1 त्रास्यमाणं; B1 भ्रास्यमानं; Da1 D1.5 M3 °माणस्; Dn1 °मानं (for °माणं). B5 Da1 D1.5 तूर्णं (for तं तु). — b) Ś2 विमलादित्यवर्चसं; K1 विलरस्वर° (sic); Da1 विमलांबरवर्चसां; S (except T2) °बर(G2 °बुद)दर्शनं. — c) S तदा (for

कालोपम ततो मेने सुतसोमस्य धीमतः ॥ २८
सोऽचरत्सहसा खड्गी मण्डलानि सहस्रशः ।
चतुर्विंशन्महाराज शिक्षाबलसमन्वितः ॥ २९
सौबलस्तु ततस्तस्य शरांश्चिक्षेप वीर्यवान् ।
तानापतत एवाशु चिच्छेद परमासिना ॥ ३०
ततः क्रुद्धो महाराज सौबलः परवीरहा ।
प्राहिणोत्सुतसोमस्य शरानाशीविषोपमान् ॥ ३१
चिच्छेद तांश्च खड्गेन शिक्षया च बलेन च ।
दर्शयल्लाँघवं युद्धे तार्क्ष्यवीर्यसमद्युतिः ॥ ३२

तस्य संचरतो राजन्मण्डलावर्तने तदा ।
क्षुरप्रेण सुतीक्ष्णेन खड्गं चिच्छेद सुप्रभम् ॥ ३३
स च्छिन्नः सहसा भूमौ निपपात महानसिः ।
अवशस्य स्थितं हस्ते तं खड्गं सत्सरुं तदा ॥ ३४
छिन्नमाज्ञाय निस्त्रिंशमवप्लुत्य पदानि षट् ।
प्राविध्यत ततः शेषं सुतसोमो महारथः ॥ ३५
स च्छित्त्वा सगुणं चापं रणे तस्य महात्मनः ।
पपात धरणीं तूर्णं स्वर्णवज्रविभूषितः ।
सुतसोमस्ततोऽगच्छच्छ्रुतकीर्तेर्महारथम् ॥ ३६

C. 8. 1032
B. 8. 25. 40
K. 8. 16. 39

---

ततो). K3 V1 B D (except D2) कालदंडोपमं मेने. — d) K3 Dn1 D6 T1 श्रुतसोमस्य; D1 सूत° (for सुत°).

29 a) K3 D8 सोचरन्. T1 खड्गो (for खड्गी). — b) K3 B1–4 Da1 Dn1 D1.5.6.8 समंततः (for सहस्रशः). — c) V1 B1.3–5 Da1 D1–5.7 G1.2 चतुर्दश; B2 °विंशं; Dn1 D6 T G3 M °र्दिशं (for °विंशन्). D6 समुद्दिश्य (for महाराज). — After 29, V1 B D (except D6.8) ins.:

142* भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं विप्लुतं सृतम्।
संपातं समुदीर्यं च दर्शयामास संयुगे।

[Cf. 6. 50. 45. — (L. 1) B1 आवृत्तम् (for उद्भ्रान्तम्). V1 आधूद्धम् (sic); B3 Da1 D1.2.5 आधूतम्; B5 आवृत्तम्; Dn1 आभूतम् (for आविद्धम्). B2 आधूतं (for आप्लुतं). V1 B4 Dn1 D2 प्लुतनिः(Dn1 D2 °नि)सृतं; Da1 D1.5 द्रुतनिःसृतं (for विप्लुतं सृतम्). B1 स्मृतं; B2 स्रुतं; B5 तथा (for सृतम्). ❀Cc: भ्रांतादयः परिभाषिताः।❀ — (L. 2) B4m समुदीषं; Ccp °दीक्ष्यं (for °दीर्यं). D2 संपातसमुदीर्ज्यं च (for the prior half).]

30 a) V1 D2 सौबलस्य. — D3 om. $30^{cd}$.

31 D3 erroneously, reads $31^a$–$53^b$ after अशीत्या (in $67^c$). — b) V1 D2–4.7 पुनरेव च (D2 हि) (for परवीरहा). — c) K3 D6 T1 श्रुतसोमास्य; V1 B1.5 D2–4.7 M2–4 सुतसोमाय; Dn1 श्रुतसेनाय (for सुतसोमस्य). — d) Ś1 (*sup. lin.* as in text).2 K1.2.4 राजन्नाशीविषोपमान्.

32 For sequence in D3, cf. v. l. 31. — a) Dn1 विछेद (for चिच्छेद). V1 B (except B2.3) Dn1 D2.4.6.7 S तांस्तु (for तांश्च). Ś1 भल्लेन; K2 बल्लेन (for खड्गेन). — c) D1 युद्धं. — d) K1 तार्क्ष्यवीर्यसमच्युतिः; K3 D6.8 तार्क्ष(D6 °क्ष्यं)वीर्यपराक्रमः; V1 B2.4 Dn1 D2–4.7 S तार्क्ष्य(M1 °क्ष)तुल्यपराक्रमः.

33 For sequence in D3, cf. v. l. 31. — a) T3 G3 राजा (for राजन्). — b) Ś K2.4 मंडले वर्तने; K3 D1.5 मंड(K3 °ग)लावर्तते (for मण्डलावर्तने). Ś K1.2.4 T1 तथा (for तदा). T2 मंडलानि ततस्ततः. — c) V1 क्षुराग्रेण (for क्षुरप्रेण). — d) M1 चिक्षेप (for चिच्छेद). T3 सप्रभं.

34 For sequence in D3, cf. v. l. 31. — a) K3 G1.2 M संच्छिन्नः (for स च्छिन्नः). — b) B3 महाद्युतिः. — c) K3 B3 D1.5.8 अर्धमन्यत्; V1 B1.4.5 D2–4.7 S अर्धमस्य; B2 Da1 D6 अर्धमन्य-; Dn1 अर्द्धं तस्य (for अवशस्य). K4 अवसंपस्थिते हस्ते (sic). — d) K4 शत्सरु. K1 मत्सरुं तं च भारत; K3 B2–5 Dn1 D3.4.7.8 सु(K3 B2 D8 स)त्सरोस्तस्य (B2.5 D4.7 °त्र) भारत; V1 D2.6 स-(D2 त)त्सरुं तस्य भारत; B1 युयुत्सोस्तस्य भारत; Da1 D1 T2 सत्सरुस्तस्य (Da1 °त्र) भारत; D5 सुशरस्तस्य भारत; T1 G1 यत्तु सत्सरु भारत; T3 M स(M4 त)त्सरुं यत्तु भारत; G2 सत्सरु यन्तु भारत; G3 सुत्सरुं यत्तु भारत.

35 For sequence in D3, cf. v. l. 31. — a) Ś2 K1.2.4 B3 आदाय (for आज्ञाय). — After $35^{ab}$, D2 ins.:

143* सोऽन्यत्कार्मुकमादाय सुदृढं वेगवत्तरम्।

— c) K3 प्राविध्यच्च. Cc °ध्यत (as in text). D2 तूर्णं (for शेषं). D8 प्राविध्य कृतमशेषं (sic); T1.2 G1.2 M प्राविध्यतासेस्त(T2 G1.2 °तासै त)च्छेषं. — d) Ś2 सुतसोम-; K3 Dn1 D6 श्रुतसोमो. V1 D2 S (except T2) महाबलः (for °रथः). B1 सुतसोमं तथा रथः.

36 For sequence in D3, cf. v. l. 31. — a) D4 संछित्त्वा; T2 G1 M2–4 तच्छित्त्वा; T3 G2.3 स च्छिद्य (for स च्छित्त्वा). — S (except T2) transp. $36^b$ and $36^d$. — c) D4 तत्र (for तूर्णं). — d) K2.4 स्वर्णवर्णविभूषितः; K3 सुवर्णवज्रभू°; V1 B D S स्वर्णवज्रविभूषितं. — e) K3 B2 Dn1 D6 T1 श्रुत° (for सुत°). T1 तथा (for ततो). K3 गत्वा; Dn1 [ऽ]गच्छन्; S

C. 8. 1032
B. 8. 25. 40
K. 8. 16. 40

सौबलोऽपि धनुर्गृह्य घोरमन्यत्सुदुःसहम् ।
अभ्ययात्पाण्डवानीकं निघ्नञ्शत्रुगणान्बहून् ॥ ३७
तत्र नादो महानासीत्पाण्डवानां विशां पते ।
सौबलं समरे दृष्ट्वा विचरन्तममीतवत् ॥ ३८
तान्यनीकानि दृप्तानि शस्त्रवन्ति महान्ति च ।
द्राव्यमाणान्यदृश्यन्त सौबलेन महात्मना ॥ ३९
यथा दैत्यचमूं राजन्देवराजो ममर्द ह ।
तथैव पाण्डवीं सेनां सौबलेयो व्यनाशयत् ॥ ४०
धृष्टद्युम्नं कृपो राजन्वारयामास संयुगे ।
यथा दृप्तं वने नागं शरभो वारयेद्युधि ॥ ४१
निरुद्धः पार्षतस्तेन गौतमेन बलीयसा ।
पदात्पदं विचलितुं नाशक्नोत्तत्र भारत ॥ ४२
गौतमस्य वपुर्दृष्ट्वा धृष्टद्युम्नरथं प्रति ।
वित्रेसुः सर्वभूतानि क्षयं प्राप्तं च मेनिरे ॥ ४३
तत्रावोचन्विमनसो रथिनः सादिनस्तथा ।
द्रोणस्य निधने नूनं संक्रुद्धो द्विपदां वरः ॥ ४४
शारद्वतो महातेजा दिव्यास्त्रविदुदारधीः ।
अपि स्वस्ति भवेदद्य धृष्टद्युम्नस्य गौतमात् ॥ ४५
अपीयं वाहिनी कृत्स्ना मुच्येत महतो भयात् ।
अप्ययं ब्राह्मणः सर्वान्न नो हन्यात्समागतान् ॥ ४६

---

(except T2) राजन् (for [ऽ]गच्छत्). — *f*) K1 om. from कीर्तें up to शस्त्र (in 39*b*). Dn1 D1 °कीर्तिर् (for °कीर्तेर्). S (except T2) श्रुतकीर्तिरथं गतः.

37 For sequence in D3, cf. v. l. 31. K1 om. 37 (cf. v. l. 36). — *b*) T3 G3 अन्यं (for अन्यत्). V1 B5 D2–4. 7 सुदुर्जयं; B1 सुदुष्करं; Dn1 स दुःसहं; T1. 3 G M महाबलः; T2 सुदर्शनं (for सुदुःसहम्). — *c*) B3. 4 Da1 D1. 5 पांडवीं सेनां (for पाण्डवानीकं).

38 For sequence in D3, cf. v. l. 31. K1 om. 38 (cf. v. l. 36). — *a*) B1 ततो (for तत्र). — *c*) K3 सौबलस्य रथं दृष्ट्वा. — *d*) B1 विचरन् **भीतवत्.

39 For sequence in D3, cf. v. l. 31. K1 om. up to शस्त्र (in *b*) (cf. v. l. 36). — *a*) Ś2 तान्यनेकानि. Da1 D1. 5 तृप्तानि; Dn1 दृष्टानि; T2 त्रस्तानि (for दृप्तानि). — *b*) Ś2 K2. 4 शत्रुवंति; D1 शस्त्रदंति (for °वन्ति). B3 महांत्यपि. — *c*) B1 G1 द्रव्यमाणानि; D4. 6 द्राव्यमानानि; G2 द्रवमाणानि. K4 द्राव्यमानानि दृश्यंत.

40 For sequence in D3, cf. v. l. 31. — *a*) Da1 D1. 5 अथ (for यथा). B3 दैत्यबलं; D3 °चमुं. — *c*) T3 G1. 2 पांडवानीकं (for पाण्डवीं सेनां). — *d*) B3 सौबलोपि; D1 सौवलेन. D2 व्यदत् (sic); T3 G1. 2 व्यनीनशत्; M1 [ऽ]प्यनाशयत् (for व्यनाश°). — V1 repeats 40*cd*. — K3. 4 V1 B D S ins. after 40 (K4 after 42) an addl. colophon. [*Adhy. name:* T1. 2 शकुनिकृत(T2 °सुत)सोमयुद्धं. — *Adhy. no.* (figures, words or both): B1. 4. 5 D6 25; D4 26; T1. 3 G M 16; T2 18.] — After the colophon, G2 ins. श्रीकृष्णाय नमः.

41 For sequence in D3, cf. v. l. 31. Before 41, K3. 4 V1 B D S (except G3) ins. संजय उवाच. — *a*) Dn1 T2 G2 ततो (for कृपो). — *c*) D3–5. 7 दृष्ट्वा (for दृप्तं). K3 D3 महा-; D1 च ते (for वने). B2. 5 D2–4. 7 T2 सिंहं (for नागं). — *d*) V1 D4 सरभो; D2 शलभो (for शरभो). Ś1 [ऽ]पारयद्; Ś2 K4 [ऽ]धारयद्; K1. 2 D2 T2 [ऽ]वारयद् (for वारयेद्).

42 For sequence in D3, cf. v. l. 31. — *a*) B5 विरुद्धः. G2 पार्षदस्. K1 विरुद्धा पर्वतस्तेन (sic). — *b*) B1. 3. 4 Da1 D1. 5 महात्मना (for बलीयसा). — *c*) V1 प्रचलितुं (for विच°). — *d*) K3 B5 Dn1 D2–4. 6–8 T1. 2 G1 M नाशकत् (for नाशक्नोत्). G1 पार्षतः (for भारत). T3 G2. 3 न शक्नोत्यत्र भारत. — After 42, K4 ins. an addl. colophon (cf. v. l. 40).

43 For sequence in D3, cf. v. l. 31. Before 43, K4 ins. संजय उवाच. — *a*) V1 B D2–4. 7 T2. 3 G2. 3 रथं; Da1 D1. 5 धनुर् (for वपुर्). D6 च दुर्दृष्टो (for वपुर्दृष्ट्वा). — *b*) Ś2 धृष्टद्युम्नं; D6 गौतमस्य (for धृष्टद्युम्न-). — *c*) B1. 4 वित्रेशुः; Dn1 विनेशुः (for वित्रेसुः). — *d*) T2 भयं; Cc क्षयं (as in text).

44 For sequence in D3, cf. v. l. 31. — *a*) K1 Da1 D1. 5 तत्राब्रुवन्; B1. 3. 4 त(B4 अ)थाब्रुवन् (for तत्रावोचन्). S (except T2) तत्र जल्पंति पांडूनां. — *b*) T2 तदा (for तथा). — *c*) Ś2 K4 T1 G2 निधनं; V1 B1. 4. 5 D T2. 3 G1. 3 M निधनात् (for निधने). Ś2 K4 श्रुत्वा; V1 B5 Da1 तूर्णं (for नूनं). — *d*) K1 संक्रुद्धं. Ś1 K2 वर.

45 For sequence in D3, cf. v. l. 31. — *a*) K1 शरद्वतो; K2 नार°; M1 शारद्वतो. Dn1 महाराज (for महातेजा). — *b*) G2 दिव्यास्त्रविदुषो युधि. — *c*) K4 अपस्वस्ति. Cc cites अपि (as in text). D1 भवं (for भवेद्). K1. 2. 4 B3 D7 T2 G1. 2 अस्य; D1 एव (for अद्य).

46 For sequence in D3, cf. v. l. 31. — *b*) Ś2 K1. 3

याद्दशं दृश्यते रूपमन्तकप्रतिमं भृशम् ।
गमिष्यत्यद्य पदवीं भारद्वाजस्य संयुगे ॥ ४७
आचार्यः क्षिप्रहस्तश्च विजयी च सदा युधि ।
अस्त्रवान्वीर्यसंपन्नः क्रोधेन च समन्वितः ॥ ४८
पार्षतश्च भृशं युद्धे विमुखोऽद्यापि लक्ष्यते ।
इत्येवं विविधा वाचस्तावकानां परैः सह ॥ ४९
विनिःश्वस्य ततः क्रुद्धः कृपः शारद्वतो नृप ।
पार्षतं छादयामास निश्चेष्टं सर्वमर्मसु ॥ ५०

स वध्यमानः समरे गौतमेन महात्मना ।
कर्तव्यं न प्रजानाति मोहितः परमाहवे ॥ ५१
तमब्रवीत्ततो यन्ता कच्चित्क्षेमं नु पार्षत ।
ईदृशं व्यसनं युद्धे न ते दृष्टं कदाचन ॥ ५२
दैवयोगात्तु ते बाणा नातरन्मर्मभेदिनः ।
प्रेषिता द्विजमुख्येन मर्माण्युद्दिश्य सर्वशः ॥ ५३
व्यावर्तये तत्र रथं नदीवेगमिवार्णवात् ।
अवध्यं ब्राह्मणं मन्ये येन ते विक्रमो हतः ॥ ५४

C. 8. 1051
B. 8. 26. 15
K. 8. 17. 14

मुच्यते (for मुच्येत). D1 भवान् (for भयात्). — M1 om. (hapl.) 46$^{cd}$. — $^{c}$) Ś2 अपीयं; D4 अद्यायं; M2-4 अयं तु (for अप्ययं). M2 ब्राह्मणान् (for ब्राह्मणः). — $^{d}$) Ś K1.2.4 नूनं; G2 नागान् (for न नो).

47 For sequence in D3, cf. v. l. 31. — $^{a}$) G2 नूनम् (for रूपम्). — $^{b}$) S रणे (for भृशम्). — $^{c}$) B2 पृथिवीं; Da1 पदवी; Ca. c °वीं (as in text). — $^{d}$) T1 भरद्वाजस्य; Ca भार° (as in text). K3 V1 B5 D (except Da1 D1.5) S गौतमः (for संयुगे).

48 For sequence in D3, cf. v. l. 31. — $^{b}$) K1 विजयीव. M3.4 -युधः (for युधि). — $^{c}$) T1.3 G M शस्त्र(G1 श्रुत)संपन्नः.

49 For sequence in D3, cf. v. l. 31. — $^{a}$) K1 पादतश्च; K3 पार्षतस्य; B1.2 S °तस्तु (for °तश्च). B5 D2-4.7 T1.3 G2.3 M महा-; G1 समो (for भृशं). — $^{b}$) M हि (for [अ]पि). Da1 D1.5 M2-4 दृश्यते (for लक्ष्यते). B1-3 Dn1 D3.4.7 T1 विमुखोद्या(Dn °स्या)-भिल°; D3 विमुख्यः सोभिल°. — $^{c}$) G1 विहिता (for विविधा). G2 तस्य (for वाचस्). — $^{d}$) K1 तथकानां (for तावकानां). S व्यश्रूयंत (G2 न श्रूयंते) महारणे (T1 °हवे). — After 49, K4 V1 B Da1 D1.3-7 ins.:

144* व्यश्रूयन्त महाराज तयोस्तत्र समागमे ।
[K4 ययोस् (for तयोस्). D1 समागमं.]

On the other hand, Dn1 D2 ins. after 49:

145* विचेरुस्तत्र समरे गौतमाद्भयशंसकाः।
[D2 गौतमा भावसंमताः (for the posterior half).]

50 For sequence in D3, cf. v. l. 31. — $^{a}$) Some MSS. विनिश्वस्य; B1.3.4 D1.5 विनिश्विस्य. K2 (before corr.) V1 B D2-4.6.7 S क्रोधात् (G2 कोपात्) (for क्रुद्धः). — $^{b}$) D4 तथा; G2 नृपः; M2-4 युधि (for नृप). — $^{c}$) G1.2 पार्षदं. K3 D3 ताडयामास; V1 B5 Dn1 D2-4.6.7 चार्द° (for छाद°). — $^{d}$) B1 Dn1 सर्वकर्मसु; S शरवृष्टिभिः (for सर्वमर्मसु).

51 For sequence in D3, cf. v. l. 31. — $^{a}$) V1 B2.5 Dn1 D2-4.6.7 T2 हन्यमानः (for वध्य°). — $^{c}$) K3 B1.4 Dn1 D3 नाभिजानाति; V1 B2.3.5 D2-4.6.7 न स जानाति; S नाभि(M3 °धि)जज्ञे वै (for न प्रजानाति). — $^{d}$) K3 V1 B2.5 D (except Da1 D1.5) S मोहेन महता (K3 तमसा) वृतः.

52 For sequence in D3, cf. v. l. 31. — $^{b}$) Da1 M3 कच्चित्; D3 कथं (for कच्चित्). Ś K1.2.4 V1 B (except B4) D2-4.6 T2 G1.2 M तु; Cc नु (as in text). K3 Dn1 D3 तवारिहन् (for नु पार्षत). K2 पार्षतः; D2.6 S मारिष (for पार्षत). — $^{c}$) B2 सदृशं (for ईदृशं). — $^{d}$) Ś2 ते न (by transp.). K3 B3 Dn1 D3 S (except M2-4) मे दृष्टं; K4 दृष्टं ते (by transp.). D2-4.7 मया क्वचित् (for कदाचन).

53 For sequence of 53$^{ab}$ in D3, cf. v. l. 31. — $^{a}$) Ś K1.2.4 देवयुद्धात्; G1 देवयोगात् (for दैव°). K3 D3 च ते; D4 हि ते; T1 ततो; T2.3 G इमे (for तु ते). G2 M1 बाणान् (for बाणा). — $^{b}$) K3 Dn1 D3 व्यपतन्; V1 D6 T2 नाभवन्; B Da1 D1-5.7 नापतन् (for नातरन्). K2 (before corr.) मर्मभेदिनि. T1.3 G M न जघ्नु(G2 निजघ्नु-; M1 जघ्नतु)र्मर्म (T1 °मंस) चाहवे. — $^{d}$) K1.3 B1.3-5 D (except D2.6.3) सर्वतः; M2-4 वै शराः (for सर्वशः).

54 $^{a}$) K4 व्यावर्त्तते; B3 D3.6 व्यावर्त्तय; D3 व्यवर्त्त-ये; Cc व्यावर्तये (as in text). K3 V1 Dn1 D2.3 T2.3 G M तव रथं; B1.3-5 Da1 D1.3-7 रथं तूर्णं; T1 रथमिमं (for तत्र रथं). B2 व्यावर्त्तयेत रथं च. — $^{b}$) K3 D3 इवार्णवः; T1.2 G1.3 M इवाहवात्; T3 G2.3 इवांभसा. — $^{c}$) B3 असाध्यं (for अवध्यं). K3 D1.3 (marg. *sec. m.* as in text) मेने (for मन्ये). — $^{d}$) K1 विक्रमे. T1.3 G2.3 M1 (*sup. lin.*). 2-4 हृतः (for हतः).

C. 8. 1051
B. 8. 25. 15
K. 8. 17. 15

धृष्टद्युम्नस्ततो राजञ्शनकैरब्रवीद्वचः ।
मुह्यते मे मनस्तात गात्रे स्वेदश्च जायते ॥ ५५
वेपथुं च शरीरे मे रोमहर्षं च पश्य वै ।
वर्जयन्ब्राह्मणं युद्धे शनैर्याहि यतोऽच्युतः ॥ ५६
अर्जुनं भीमसेनं वा समरे प्राप्य सारथे ।
क्षेममद्य भवेद्यन्तरिति मे नैष्ठिकी मतिः ॥ ५७
ततः प्रायान्महाराज सारथिस्त्वरयन्हयान् ।
यतो भीमो महेष्वासो युयुधे तव सैनिकैः ॥ ५८
प्रद्रुतं तु रथं दृष्ट्वा धृष्टद्युम्नस्य मारिष ।
किरञ्शरशतान्येव गौतमोऽन्वयौ तदा ॥ ५९
शङ्खं च पूरयामास मुहुर्मुहुररिंदमः ।
पार्षतं प्राद्रवद्यन्तं महेन्द्र इव शम्बरम् ॥ ६०
शिखण्डिनं तु समरे भीष्ममृत्युं दुरासदम् ।
हार्दिक्यो वारयामास स्मयन्निव मुहुर्मुहुः ॥ ६१
शिखण्डी च समासाद्य हृदिकानां महारथम् ।
पञ्चभिर्निशितैर्भल्लैर्जत्रुदेशे समार्दयत् ॥ ६२
कृतवर्मा तु संक्रुद्धो भित्त्वा षष्टिभिराशुगैः ।
धनुरेकेन चिच्छेद हसन्राजन्महारथः ॥ ६३
अथान्यद्धनुरादाय द्रुपदस्यात्मजो बली ।
तिष्ठ तिष्ठेति संक्रुद्धो हार्दिक्यं प्रत्यभाषत ॥ ६४
ततोऽस्य नवतिं बाणान्रुक्मपुङ्खान्सुतेजनान् ।
प्रेषयामास राजेन्द्र तेऽस्याभ्रश्यन्त वर्मणः ॥ ६५

---

55 b) K3 अवोचच्छनकैर्वचः. — d) K1.3 V1 B D (except Da1 D1.5) T2.3 G1.3 M गात्र-; T1 गात्राद् (for गात्रे). K3 श्वेदश्च; K4 खेदश्च.

56 G2 om. (hapl.) $56^{ab}$. — a) K3 V1 B D S वेपथुः. T1.3 G1.3 M क्लमथुश्चैव (for च शरीरे मे). — b) K3 Dn1 D8 रोमहर्षस्तथा ह्यभूत्; V1 B1-3 D1.2.5.6 S (G2 om.) °र्षश्च जायते; B4.5 Da1 D3.4.7 °र्षश्च सारथे. — c) T1 अजेयो ब्राह्मणो युद्धे; G2 ब्राह्मणं वजयन्युद्धे. — d) K1 याति (for याहि). K4 S (except T2) [ऽ]च्युतौ; B3.5 D3.4.6.7 [ऽ]र्जुनः (for ऽच्युतः).

57 a) B1.3.4 Da1 D1.5.8 च (for वा). — b) K1 समरं. — c) B1.3.4 एव (B3 °वं) (for अद्य). M3 भये (for भवेद्). Da1 D1.5 भवेयु(D1 °द्यु)स्तर् (sic) (for भवेद्यन्तर्). V1 B2 Dn1 S मह्यम्; B5 D3.4.7 एवम्; D2 एकम् (for यन्तर्). D6 क्षममद्यंतरिति मे (sic). — d) B5 D2-4.7 एषा (for इति). B6 वै (for मे). K3 नैष्टिका; K4 नेष्ठिकी; D2 नैष्टकी; Ca नैष्ठिका.

58 b) D2.5 G2 त्वरया (for त्वरयन्). Da1 om. हयान्. — c) Ś K1.2.4 Dn1 ततो; B1.3.4 Da1 D1.5.6 यत्र (for यतो). Ś2 भीम-. Dn1 G1.2 महाराज (for महेष्वासो). — d) K1 D8 युयुद्धे (for युयुधे).

59 a) K1 प्राद्रुतं. V1 B2.3.5 D2.4.6.7 च (for तु). — b) K3.4 मारिषः. — c) B1 शत° (for शर°). — d) V1 T2 रणे; D2 रणात्; M1 तदौ; M2-4 द्रुतं (for तदा).

60 K1 reads $60^{bc}$ in marg. *sec. m.* — b) K1 अर्विंदमम्; D1.3 M2 अरिंदम. — c) Ś1 प्रद्रवत्यंतो; Ś2 K2.4 प्रद्रवन्यत्तो (K4 °तो); K3 D8 द्रावयन्यांतं; V1 B2.5 Dn1 D2.6 T2 द्रावयामास; B1.3.4 Da1 D1.5 T1 G2 M द्रावयन्म(T1 G2 M °न्य)त्तो; D3.4.7 त्रासयामास; T3 G1.3 द्रावयन्हसो (for प्राद्रवद्यन्तं). — d) V1 B2.5 D2-4.7 महेंद्रो नमुचिं यथा.

61 G2 om. $61^{a}$–$62^{b}$. — a) K1 शिखंडिनां. — b) K1 दुरासनं (for दुरासदम्).

62 G2 om. $62^{ab}$ (cf. v. l. 61). — a) Ś1 K3.4 V1 B (except B2) Da1 D2-8 शिखं(D3 °षं)डी तु; D1 शिखंडिनं (for °डी च). Ś1 (before corr.) समारुह्य; Ś2 K4 समाश्वास्य (for °साद्य). — b) T1 हार्दिक्यानां; G1 हृदीकानां. — c) K3 Dn1 D6.8 T2 G2 बाणैर् (for भल्लैर्). — d) K1 शत्रुदेशे; K3 जतु° (for जत्रु°). K1 समासदत्; K3 Dn1 S समर्पयत्; V1 B5 D3.4.6.7 समाहनत्; B1-4 Da1 D1.2.5.8 समापयत् (for °र्दयत्).

63 a) V1 हार्दिक्यो; B2 हार्दिक्यं; G5 संरब्धो (for संक्रुद्धो). — D1 repeats $63^{bc}$ after $68^{a}$. — b) B2 हत्वा; S विद्ध्वा (for भित्त्वा). K3 Dn1 D3.7.8 षष्ट्या पतत्रिभिः; K4 षष्टिभिराहतैः; V1 B2 D6 द्वात्रिंशता शरैः; B1.3.4 पंचभिराशुगैः; B5 षष्ट्याभिराशुगैः (sic); D2 षष्ट्या तदाशुगैः; G2 चाष्टभिराशुगैः (for षष्टिभिरा°). — c) B1.3 स चैकेन धनुश्छित्त्वा. — d) T1.3 G M स्मयन्निव; T2 हसन्नाजौ (for °न्राजन्). K1 महारथाः; D2 °रथं.

64 c) V1 चाक्रुद्धो; S (except T2) हार्दिक्यं (for संक्रुद्धो). — d) D2 प्रहसन्वाक्यमब्रवीत्; S (except T2) संक्रुद्धः समपद्यत.

65 a) D2 नवभिर्; D6 M1 नवतिर्; G1 M3.4 नवतीं. D1 बाणा. — b) M1 रुग्मपुंखान्. K3 D8 T1 सुतेजसः; B2 स्वतेजसा; T2 सुतेजितान् (for °जनान्). — c) T3 G समरे (for राजेन्द्र). — d) Ś2 D1.5.6 T2 G1.2 तस्य; B1 ते च

वितथांस्तान्समालक्ष्य पतितांश्च महीतले ।
क्षुरप्रेण सुतीक्ष्णेन कार्मुकं चिच्छिदे बली ॥ ६६
अथैनं छिन्नधन्वानं भग्नशृङ्गमिवर्षभम् ।
अशीत्या मार्गणैः क्रुद्धो बाह्वोरुरसि चार्दयत् ॥ ६७
कृतवर्मा तु संक्रुद्धो मार्गणैः कृतविक्षतः ।
धनुरन्यत्समादाय समार्गणगणं प्रभो ।
शिखण्डिनं बाणवरैः स्कन्धदेशेऽभ्यताडयत् ॥ ६८
स्कन्धदेशे स्थितैर्बाणैः शिखण्डी च रराज ह ।
शाखाप्रतानैर्विमलैः सुमहान्स यथा द्रुमः ॥ ६९
तावन्योन्यं भृशं विद्ध्वा रुधिरेण समुक्षितौ ।

C. 8. 1068
B. 8. 26. 32
K. 8. 17. 32

(for तेऽस्य). Ś2 [अ]भृश्यंत; K1 [अ]त्रश्यंत; G1.2 भ्रश्यंत (for [अ]भ्रश्यन्त). Dn1 D1.2.8 वर्मणि; T2 वाजिनः; M2 वर्मणा (for वर्मणः).

66 $^{a}$) K4 वितथास्; D4 G2 विरथांस्; D8 विततांस; T1 वतथांस्; T2 व्यथितांस् (for वितथांस्). B2 समालोक्य (for °लक्ष्य). — $^{c}$) G1 स तीक्ष्णेन. — $^{d}$) S सोच्छिनद् (for चिच्छिदे). K1.3 V1 B D T1 M भृशं; B4 m पुनः; T2.3 G1.3 दृढं; G2 रथं (for बली).

67 $^{a}$) K1 भिन्नधन्वानं. — $^{b}$) T3 G2.3 भग्नदपम्; M2–4 भिन्नशृंगम् (for भग्न°). M1 इवाषभंम्. — $^{c}$) D2 अतीत्या; D8 आशीत्या. After अशीत्या, D8 erroneously reads 31$^{a}$–53$^{b}$ (cf. v. l. 31). B4 माकुलैः (for मार्गणैः). T1 क्रोधाद् (for क्रुद्धो). — $^{d}$) K3 V1 B D (except D8) S चार्पयत् (for चार्द°).

68 $^{a}$) K1.3 Dn1 D8 T2 च (for तु). T1 M सात्वतस्तु रणे क्रुद्धो; T3 G3 सात्वतं तु सुसंक्रुद्धो; G1 सात्वतस्तु सुसं°; G2 सात्यकिस्तु सुसं°. — After 68$^{a}$, D1 repeats 63$^{bc}$. — $^{b}$) Ś1.2 (*sup. lin.* as in text) K1 B D (except D6) M1 Ccp क्षतविक्षतः; Ś2 (*sup. lin.* and also marg.) विक्षितः कृतः; K3 क्षतविक्षितः; K4 क्षतविक्षतः; T1 भृशविक्षितः; T2.3 G क्षतविग्रहः; M2 कृतविक्षतिः; M3 °विक्षितः; Cc °विक्षतः (as in text). — After 68$^{ab}$, K3.4 V1 B D S ins.:

146* ववाम रुधिरं गात्रैः कुम्भवक्त्रादिवोदकम् ।
रुधिरेण परिक्लिन्नः कृतवर्मा त्वराजत ।
वर्षेण क्लेदितो राजन्यथा गैरिकपर्वतः ।

[(L. 1) K3 चकार; K4 विक्षरं; V1 व्यक्षरद्; B2 T2 विक्षरन्; Da1 D1.5.8 चक्षार; Dn1 सुस्राव; D2 विचरन्; D6 ह्यक्षरन् (sic); T1.3 G2.3 M2–4 व्यसृजद्; G1 विसृजं; M1 विसृजन् (for ववाम). D2 विविधैर् (for रुधिरं). K3 B3.4 Dn1 D5 T1 गात्रात्; M1 (before corr.) गात्रं (for गात्रैः). S (except T2) मुखात्कुंभ (for कुम्भवक्त्राद्). — (L. 2) G2 इव (for परि-). K3 तवमन्ये (for कृतवर्मा). K2 V1 D6 व्यराजत; B2.5 D2–4.7 त्वराजत (for व्यरोचत). — (L. 3) Dn1 प्लावितो (for क्लेदितो). B1 D6 गैरिकः (D6 °का-) पर्वतो यथा (for the posterior half).]

— $^{c}$) K2 भानुर् (for धनुर्). K3 V1 B D S अथान्यद्धनुरादाय. — $^{d}$) V1 B Da1 Dn1 D1.3–5.7 M समार्गणगुणं (for °गणं). K3.4 V1 B D T2 प्रभुः; T1.3 G M ततः (for प्रभो). — $^{e}$) K3 Dn1 D8 T2 बाणशतैः; V1 B2.5 D2–4.6.7 °गणैः; T1.3 G M त्रिभिर्बाणैः (for बाणवरैः). — $^{f}$) S (except T2) शंखदेशे (for स्कन्ध°). K3.4 V1 B D व्यताडयत्; T1 ह्यताडयत् (for ऽभ्यताड°).

69 $^{a}$) K3 V1 B D (except D8) T2 स्कंधदेश- (D1 °शा-); T1.3 शंखदेश-; M शंखदेशे (for स्कन्धदेशे). — $^{b}$) K1.3 V1 B D T2 तु; T1 न; T3 G2.3 M स (for च). V1 B2.4.5 D2–4.6.7 T2.3 G3 व्यराजत; T1 G2 M व्यरोचत (for रराज ह). G1 स शिखंडी व्यराजत. — $^{c}$) B1–4 Da1 D1.2.5 विपुलैः (for विमलैः). K3 B5 D3.4.7 शाखाप्रशाखविपुलः (K3 °ततो); V1 D6 °वितानैर्विततः (D6 °पुलैः); Dn1 D8 °प्रशाखैर्विततो; T1.3 G M2–4 °प्रशाखैर्विपुलैः (T3 G °मलैः); M1 °प्रशाखैः सुविपुलैः (hypermetric). — $^{d}$) T1 स महान् (for सुमहान्). B1.4 Da1 D1.5 च; B2 स्म; B3 तु; T1.3 G M वै (for स). B2 द्रुमो यथा (by transp.); M2–4 वनस्पतिः. K3 Dn1 D8 महास्कध इव द्रुमः; V1 B5 D2–4.6.7 T2 सुमहान्पादपो यथा.

70 $^{a}$) K3 च संक्रुद्धौ; V1 D6 भृशं विद्धौ; T1 G1.2 M रणे विद्ध्वा (for भृशं विद्ध्वा). — $^{b}$) Da1 D1.5 समुक्षितं; T2 G2 समुत्क्षितौ. — After 70$^{ab}$, S ins.:

147* पोप्लूयमानौ हि यथा महान्तौ शोणितह्रदे ।
तद्वद्विरेजतुर्वीरौ शोणितेन परिप्लुतौ ।
यथा च किंशुकौ फुल्लौ पुष्यमासेऽभ्युपागतौ ।
रुधिरोक्षितसर्वाङ्गौ रक्तचन्दनरूषितौ ।
भुजगाविव संक्रुद्धौ रेजतुस्तौ नरोत्तमौ । [5]
तावुभौ शरनुन्नाङ्गौ परस्परशरक्षतौ ।

[(L. 1) T3 G3 पोप्लूयमाना. T1 शोभमानौ यथा भूमौ (for the prior half). G2 महांतं (for महान्तौ). T1 शोणितौ ह्रदौ. — (L. 3) G2 यथा हि किंशुके फुल्ले (for the prior half). T2 [ऽ]प्युपागतौ; T3 G समागते (for ऽभ्युपा°). — (L. 6) T1 भृश° (for शर°). T1.2 M1 °शरक्षते; M2–4 °कृतक्षतौ.]

— $^{c}$) D1 °शृंगाभिहतो. — K2 om. (? hapl.) 70$^{d}$–71$^{b}$.

C. 8. 1069
B. 8. 26. 33
K. 8. 17. 34

अन्योन्यशृङ्गाभिहतौ रेजतुर्वृषभाविव ॥ ७०
अन्योन्यस्य वधे यत्नं कुर्वाणौ तौ महारथौ ।
रथाभ्यां चेरतुस्तत्र मण्डलानि सहस्रशः ॥ ७१
कृतवर्मा महाराज पार्षतं निशितैः शरैः ।
रणे विव्याध सप्तत्या स्वर्णपुङ्खैः शिलाशितैः ॥ ७२
ततोऽस्य समरे बाणं भोजः प्रहरतां वरः ।
जीवितान्तकरं घोरं व्यसृजत्त्वरयान्वितः ॥ ७३
स तेनाभिहतो राजन्मूर्छामाशु समाविशत् ।
ध्वजयष्टिं च सहसा शिश्रिये कश्मलावृतः ॥ ७४
अपोवाह रणात्तं तु सारथी रथिनां वरम् ।
हार्दिक्यशरसंतप्तं निःश्वसन्तं पुनः पुनः ॥ ७५
पराजिते ततः शूरे द्रुपदस्य सुते प्रभो ।
प्राद्रवत्पाण्डवी सेना वध्यमाना समन्ततः ॥ ७६

इति श्रीमहाभारते कर्णपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

## १९

संजय उवाच ।
श्वेताश्वोऽपि महाराज व्यधमत्तावकं बलम् ।
यथा वायुः समासाद्य तूलराशिं समन्ततः ॥ १
प्रत्युद्ययुस्त्रिगर्तास्तं शिबयः कौरवैः सह ।
शाल्वाः संशप्तकाश्चैव नारायणबलं च यत् ॥ २
सत्यसेनः सत्यकीर्तिर्मित्रदेवः श्रुतंजयः ।

— d) D8 राजतुर् (for रेजतुर्). K3 वृषलाविव; D2 वृषभा इव (for °भाविव).

71 K2 om. 71ab (cf. v. l. 70). — a) G2 अन्योन्यं तु वधे यत्तौ. — c) K4 D2 रथानां (for रथाभ्यां). T2 रेजतुस्; M1 चतुरस् (sic) (for चेरतुस्).

72 b) K3 नवभिः (for निशितैः). — d) K2 D7.8 शिलासितैः.

73 a) K3 राजन्; T1 M बाणान् (for बाणं). — b) G2 तेन (for भोजः). — c) K3 T1 M जीवितांतकरान्घोरान्. — d) K3 त्वरयान्वितान्.

74 a) Ś2 शेते नाभिहतो; K3 स तैरभिहतो. G2 राजा (for राजन्). — b) S (except T2) मूर्छयाभिपरिप्लुतः. — d) M1 संश्रयात्; Ca शिश्रिये (as in text). D2.7 कश्मलान्वितः; G1 °लाश्रितः (for °लावृतः).

75 a) K3 D2.8 रथात्; T3 G रणे (रणात्). V1 B2.3.5 D (except Dn1 D8) तूर्णं (for तं तु). — b) Da1 D1.5 सारथिं. T2 वरः. — T2 om. 75cd. — c) K3 हार्दिक्यं (for हार्दिक्य-). — d) Ś2 K1 निश्वरंतं; some MSS. निश्वसंतं. B3 Dn मुहुर्मुहुः (for पुनः पुनः).

76 a) T3 G1.3 तत्र (for ततः). T1 सूनौ (for शूरे). — b) K3 सुतैः; V1 B5 D2–4.6.7 T2 [आ]त्मजे; T1 रणे; G2 शरैः (for सुते). B2.3 विभो; D8 प्रभौ; G2 सुते (for प्रभो). — c) K1 प्राद्रवीत्; V1 B6 D1–7 T3 G3 M3 व्यद्रवत् (for प्राद्रवत्). K3 कौरवी (for पाण्डवी). — d) V1 D2.6 T2 हन्यमाना; B5 व्यध°; Dn1 पीड्य° (for वध्य°). V1 परंतप (for समन्ततः).

Colophon. — *Adhy. name*: T1.2 शिखंडिपराजयः. — *Day of Karna's Generalship*: Ś2 प्रथमयुद्धदिवसे. — *Adhy. no.* (figures, words or both): Ś2 19; B1.2.4 Da D2.3.5.6 26; D1 20; D4 27; T1.3 G M 17; T2 19.

### 19

1 Before the ref., G2 reads श्रीकृष्णाय नमः; D8 om. the ref. — a) B5 D2–4.7 श्वेताश्वोथ (for °श्वोऽपि). — d) K3 वृक्षराशीं; K4 तूलराशीं; Dn1 °राशिः (for °राशिं).

2 a) Da1 D1.5 तु; M1 ते (for तं). G2 प्रत्यद्युतिस्त्रिगर्तांस्तान् (sic). — b) D3 (m as in text) विशयः (for शिबयः). S (except T2) transp. कौरवैः and सह. D3 om. from सह up to 3b. — c) Ś2 K1 साल्वः; K2.4 साल्वाः. Some MSS. संसप्तकाश्च. S (except T2) वसातयोथ साल्वा(T1 °ल्व)श्च. — d) V1 B (except B5) Dn D4.8 T2 (*sup. lin.* as in text) तत् (for यत्). T1.3 G M गोपालाश्च यशस्विनः.

3 D8 om. 3ab (cf. v. l. 2). — a) Ś K1.2.4 V1 Dn1 D2.6 T2.3 G M1 सत्यदेवः (for °सेनः). B Da1 D1.4.5.7 चंद्रदेवो. — b) T1 M2–4 मित्रसेनः (for °देवः).

सौश्रुतिश्चित्रसेनश्च मित्रवर्मा च भारत ॥ ३
त्रिगर्तराजः समरे भ्रातृभिः परिवारितः ।
पुत्रैश्चैव महेष्वासैर्नानाशस्त्रधरैर्युधि ॥ ४
ते सृजन्तः शरव्रातान्किरन्तोऽर्जुनमाहवे ।
अभ्यद्रवन्त समरे वार्योघा इव सागरम् ॥ ५
ते त्वर्जुनं समासाद्य योधाः शतसहस्रशः ।
अगच्छन्विलयं सर्वे तार्क्ष्यं दृष्ट्वेव पन्नगाः ॥ ६
ते वध्यमानाः समरे नाजहुः पाण्डवं तदा ।
दह्यमाना यथा राजञ्शलभा इव पावकम् ॥ ७
सत्यसेनस्त्रिभिर्बाणैर्विव्याध युधि पाण्डवम् ।
मित्रदेवस्त्रिषष्ट्या च चन्द्रदेवश्च सप्तभिः ॥ ८
मित्रवर्मा त्रिसप्तत्या सौश्रुतिश्चापि पञ्चभिः ।

C. 8. 1064
B. 8. 27. 9
K. 8. 18. 9

---

B5 D2.4.6.7 T3 सुतंजयः; D8 श्रुतिं°; T2 शतं° (for श्रुतं°). — c) K4 सौश्रुतश्च; D6 सश्रुतिश्च; G2 सौशतिश्च (for सौश्रुतिश्च). V1 S चंद्रदेवश्च; Dn1 चंद्रसेनश्च; D6 चैंद्र° (for चित्र°). — d) Ś K2.4 V1 B1.5 G3 चित्रवर्मा; K3 मित्रकर्मा; G2 °देवश्च (for °वर्मा). — After 3, Dn1 ins.:

148* सुशर्मा च सुधर्मा च सुवर्मा चैव भारत।

4 a) Ś K3.4 त्रिगर्तश्चैव; Cc त्रिगर्तराजः (as in text). K1 त्रिगतुस्समरे तत्र (sic). — b) K1 परिवर्तितः (for °वारितः). — c) T1 एव (for चैव). — d) D8 नानायुधधरैर्; T1 G1 °शस्त्ररथैर्; T3 G3 °शस्त्रसहैर्; G2 °शास्त्रधरैर् (for °शस्त्रधरैर्). V1 B4.5 D2–4.6.7 T2 नानाश(T2 °शा)स्त्रविशारदैः.

5 a) K3 V1 विसृजंतः; B1.5 D3.4.6.7 व्यसृजंत; B2–4 D5 T2 तेसृजंत; D1 ते स्रजंत; D2 विसृजंत; T1 M1 ते किरंतः; M2.4 ते क्षिपंतः; M3 तेक्षिपंत (for ते सृजन्तः). K1 शरव्राताः; B4 शरशतं; Dn1 D8 (before corr. as in text) शरशतान्; T3 G शरान्घोरान् (for शरव्रातान्). — b) T1 क्रुद्धा ह्यर्जुनम् (for किरन्तो°). Cc cites किरन्तः (as in text). — c) K1 अद्य वर्तत (sic); K3 B5 Da1 Dn1 D1 अभ्यवर्षंत; V1 B1–4 D2–4.6-8 S °वर्तंत; D5 °वर्धंत (for °द्रवन्त). K3.4 B1–3.5 Dn1 D2–4.7.8 S सहसा; V1 सरिता; B4 Da1 D1.5 सहिता (for समरे). — d) Ś2 K3.4 Da1 Dn1 D1.3–5 M1 वार्यौघा; K1 M4 वार्योघ; D6 G2 वार्यौघ (for वार्योघा). D1 सागरे; G2 सागरौ (for सागरम्).

6 Ś1 K2 om. (hapl.) 6. — a) K3 D8 तेर्जुनं तु. — b) M1.3.4 यौधाः (for योधाः). K1.3.4 V1 B5 D2.6 सरितः सागरं यथा. — c) K4 Da1 D1 आगच्छन्. B4 Da1 D1.4.5 निलयं (for विलयं). Ś2 K1.3 प्रनष्टास्त(Ś2 °ष्ट त)त्र दृश्यंते. — d) Dn1 D8 प्राप्येव; T2 G1.2 दृष्ट्वैव (for दृष्ट्वेव). Ś2 K1.3 वार्यौ(K1 °र्यै)घा इव सागरं (K3 °रे) (= $5^{d}$).

7 a) K3 V1 B5 D2–4.6.7 हन्यमानाः (for वध्यमानाः). — b) Ś K2.4 D1 नाजग्हुः; D6 T1.3 G1.3 M न जहुः; T2 निजघ्नुः (for नाजहुः). K3 M4 पांडवांस् (for पाण्डवं). V1 B5 Dn1 D2–4.6.7 T2 रणे; T1 तथा (for तदा). G2 तं जहुः पांडुनंदनं. — c) K3 दग्धपादा; B2.5 D3.4.7 हन्यमाना (for दह्य°). V1 B5 D5 महाराज; B1–4 तथा (B3.4 °दा) राजन्. — d) M4 शलका (for शलभा).

8 a) V1 G1 सत्यदेवस्; G2 °देवं (for °सेनस्). — After $8^{ab}$, D2 reads 149* and G2, 151*. — c) B2 चित्रदेवस्; B3 चित्रसेनस् (for मित्रदेवस्). V1 तु षष्ट्या (for त्रिषष्ट्या). V1 B2.5 D2–4.6.7 T2 तु (for च). — d) V1 B5 Dn1 D1–4.6.7 चंद्रसेनस्तु (Dn1 D1 °श्च) (for °देवश्च).

9 D2 G2 M1 om. (hapl.) $9^{ab}$. — a) K3 चित्रधर्मा; D6 मित्रधर्मा (for °वर्मा). M4 त्रिसह्यासौ (sic) (for त्रिसप्तत्या). — b) K4 T3 G3 सौश्रुतश्च (for सौश्रुतिश्च). V1 B Dn1 D3–5.7.8 T2 सप्तभिः; Da1 D1 सप्ततिः (for पञ्चभिः). M4 श्रुतिश्चापि च पंचभिः. — After $9^{ab}$, M2–4 ins. 153*, 154*. — c) V1 B1.4 D6 T3 G1.3 M1 श्रुतंजयश्च; B3 धनं° (for शत्रुं°). B1.2.5 D3.4.6.7 T2 तु (for च). G1 सप्तत्या (for विंशत्या). — d) K1 स्वशर्मा; K3 T1.2 M1 सुवर्मा; V1 D6 त्रिगर्तो (for सुशर्मा). B1 सप्तभिः. B3 चंद्रदेवं तथाष्टभिः. — Ś K V1 B1.2.4 D T G1.3 ins. after 9 (D2, after $8^{ab}$):

149* स विद्धो बहुभिः संख्ये प्रतिविव्याध तान्नृपान्।

[T2 बहुधा (for बहुभिः). Ś K2.4 युद्धे; Dn1 T2 बाणैः; D2 शूरैः; T1 G3 संखे (for संख्ये). Ś1 प्रतिविध्यत्तु; Ś2 °विध्य तु; K1 °विद्य स; K2 °विवृतु (sic); K4 °विध्यत (for °विव्याध).]

Ś K V1 B1.2.4 D (except D6) T2 cont.:

150* सौश्रुतिं सप्तभिर्विद्ध्वा सत्यसेनं त्रिभिः शरैः।

[D2 सौस्तुतिं; D8 सौश्रुतं (for सौश्रुतिं). K1 सप्तभिविद्धा; V1 Dn1 D2 T2 पंचविंशत्या.]

On the other hand, D6 T1.3 G1.3 ins. after 149*: G2, after $8^{ab}$:

151* सौश्रुतिं पञ्चविंशत्या चन्द्रदेवं तथाष्टभिः।

[G2 सौश्रुतिः; G3 °तं. D6 चंद्रसेनं; G2 चंद्रदेवस्.]

K3 V1 B1.2.4 Da1 Dn1 D1–5.7.8 ins. after 150*:

152* शत्रुंजयं च विंशत्या चन्द्रदेवं तथाष्टभिः।

[V1 B1.4 श्रुतंजयं (for शत्रुं°). Da1 D1.5 तु (for च). V1 Dn1 D2 चंद्रसेनं (for चन्द्रदेवं).]

C. 8. 1085
B. 8. 27. 9
K. 8. 18. 9

शत्रुंजयश्च विंशत्या सुशर्मा नवभिः शरैः ॥ ९
शत्रुंजयं च राजानं हत्वा तत्र शिलाशितैः ।
सौश्रुतेः सशिरस्त्राणं शिरः कायादपाहरत् ।
त्वरितश्चन्द्रदेवं च शरैर्निन्ये यमक्षयम् ॥ १०
अथेतरान्महाराज यतमानान्महारथान् ।
पञ्चभिः पञ्चभिर्बाणैरेकैकं प्रत्यवारयत् ॥ ११
सत्यसेनस्तु संक्रुद्धस्तोमरं व्यसृजन्महत् ।
समुद्दिश्य रणे कृष्णं सिंहनादं ननाद च ॥ १२
स निर्भिद्य भुजं सव्यं माधवस्य महात्मनः ।
अयस्मयो महाचण्डो जगाम धरणीं तदा ॥ १३
माधवस्य तु विद्धस्य तोमरेण महारणे ।
प्रतोदः प्रापतद्धस्ताद्रश्मयश्च विशां पते ॥ १४
स प्रतोदं पुनर्गृह्य रश्मींश्चैव महायशाः ।
वाहयामास तानश्वान्सत्यसेनरथं प्रति ॥ १५

---

K3 V1 B1.4 Da1 Dn1 D1–5.7.8 cont.: B3 ins. after 9: M2–4 ins. after 9$^{ab}$: D6 T1.3 G ins. after 150*:

153* मित्रदेवं शतेनैव श्रुतसेनं त्रिभिः शरैः ।

[K3 मित्रबंधं (for °देवं). K3 Da1 Dn1 D1.5.8 M2.4 चित्रसेनं; V1 सत्यकीर्तिं; D6 सत्यकीर्तिः; T1 M3 मित्रसेनं; T3 G सत्यदेवं (for श्रुतसेनं).]

K3 V1 B1.4 D T1.3 G M2–4 cont: Ś T2 ins. after 150*; M1 ins. after 9:

154* नवभिर्मित्रवर्माणं सुशर्माणं तथाष्टभिः ।

[T1 M1 अष्टभिर्; G1.2 M2–4 अष्टाशिर् (for नवभिर्). Dn1 विन्याध च; T1 निवर्माणं; T2 M सुवर्माणं (for सुशर्माणं). S तथैव च (for तथाष्टभिः).]

Dn1 cont.:

155* सुवर्माणं शतेनाजौ सुशर्माणं च पंचभिः ।
भूयश्चैव सुशर्माणं सुवर्माणं तथाष्टभिः ।

10 $^{a}$) B1.4 T3 G2.3 श्रुतंजयं; M1 श्रुतंजयञ्च (for शत्रुंजयं). D5 शत्रुंजयं अथेतरान्महाराजानं (sic) (for $^{a}$). — $^{b}$) K1 शिवानितैः (sic); D7.8 शिलासितैः; T2 शिलीमुखैः (for शिलाशितैः). — $^{c}$) D1 सौश्रुतेः; D2 सौस्तुतैः (for सौश्रुतेः). K1 सौश्रुतिं स्वशरस्त्राणं (sic). — $^{d}$) Ś2 त्वरिता; D1 T G त्वरितं (for त्वरितश्च). V1 Dn1 चंद्रसेनं; T2 चित्रसेनं (for चन्द्रदेवं).

11 $^{a}$) B2 D3.4.6.8 T3 तथेतरान् (for अथे°). — $^{b}$) T2 युध्यमानान् (for यत°). — $^{c}$) Dn1 om. the first पंचभिर्. — $^{d}$) Dn1 प्रत्यधारयत्; D3 °वार्ययत् (sic); T1 °पीडयत्; T3 G M2–4 °ताडयत्; M1 °डारयत् (sic) (for °वारयत्).

12 $^{a}$) G1.2 सत्यदेवस् (for °सेनस्). — $^{b}$) K4 D8 विसृजन्महत् (D8 °हान्). S (except T2) ससृजे शितं (for व्यसृजन्महत्). — $^{c}$) K4 तमुद्दिश्य (for समु°). — $^{d}$) B1 ह (for च).

13 $^{c}$) Ś1 K1.2 Dn1 T2 अयोमयो; Ś2 K4 अयोमुखो (for अयस्मयो). Ś1 K1 B2 महादंडो; K3 V1 B1.3–5 D हेमदंडो; K4 महाचंद्रो; S स्वर्णदंडो (for महाचण्डो). — $^{d}$) S धरणीतलं (for धरणीं तदा).

14 $^{a}$) B3 च; Da1 तु (for तु). K3 विध्वस्य; D3 (m as in text) विप्रस्य (for विद्धस्य). — $^{b}$) Da1 D1.5 महाहवे; Dn1 D2 °त्मना; T1 °त्मनः (for °रणे). — $^{c}$) K3 प्राद्रवद्; G1 न्यपतद् (for प्रापतद्). T G2.3 M प्रतोदमपतद्धस्ताद्. — $^{d}$) D4 तु (for च). — K3 Dn1 D4 m. 7.8 ins. after 14: T2 G1 after 15: T3 G3 M2.3 after 16$^{ab}$:

156* वासुदेवं विभिन्नाङ्गं दृष्ट्वा पार्थो धनंजयः ।
क्रोधमाहारयत्तीव्रं कृष्णं चेदमुवाच ह ।
प्रापयाश्वान्महाबाहो सत्यसेनं प्रति प्रभो ।

[T3 G3 M2.3 om. line 1. — (L. 1) = (var.) 16$^{ab}$. K3 तु निर्भिन्नं; D3 सुनिर्भिन्नं (for विभिन्नाङ्गं). T2 G1 विष्वक्सेनं सुनिर्विद्धं (for the prior half). D3 मेदं (for पार्थो). — (L. 2) G1 आहारयंस्. T2.3 G3 वाक्यं (for कृष्णं). — (L. 3) Dn1 प्रापयासान्; D3 प्रापयस्व; T2.3 G1.3 M2.3 चोदयाश्वान् (for प्रापया°). K3 T2.3 G1.2 M2.3 सत्यसेनरथं प्रति (for the posterior half).]

K3 Dn1 D4 m. 7.8 cont.:

157* यावदेनं शरैस्तीक्ष्णैर्नयामि यमसादनम् ।

while M2.3 ins. after 156*:

158* ततः संचोदयामास सत्यसेनरथं प्रति ।

M2.3 cont.: T3 G3 ins. after 156*:

159* अथ दिव्यास्त्रविच्छूरो जातमन्युर्धनंजयः ।

15 $^{a}$) K1.3 B2 D3 स तु प्रतोदं गृह्याशु; V1 Dn1 D3.4.6.7 S प्रतोदं गृह्य सोन्यं तु (D3.4.6.7 T2.3 G M1.3 °न्यत्तु); B1.2–5 Da1 D1.5 स प्रतोदं प्रगृह्याशु; D2 प्रतोदं गृह्य सौ तथा (sic). — $^{b}$) K1.3 B1.3–5 Da1 D1.5.8 तथा रश्मीन्म(K1 D8 °श्मीमं)हायशाः; V1 Dn1 D2–4.6.7 रश्मीनपि यथा पुरा; B2 रथरश्मीन्महायशाः; S रश्मीन्संगृह्य च द्रुतं (M स्वयं). — $^{c}$) B1 अस्मान् (for अश्वान्). — $^{d}$) T2.3 G1.3 सत्यदेवरथं प्रति.

विष्वक्सेनं तु निर्भिन्नं प्रेक्ष्य पार्थो धनंजयः ।
सत्यसेनं शरैस्तीक्ष्णैर्दारयित्वा महाबलः ॥ १६
ततः सुनिशितैर्बाणै राज्ञस्तस्य महच्छिरः ।
कुण्डलोपचितं कायाच्चकर्त पृतनान्तरे ॥ १७
तं निहत्य शितैर्बाणैर्मित्रवर्माणमाक्षिपत् ।
वत्सदन्तेन तीक्ष्णेन सारथिं चास्य मारिष ॥ १८
ततः शरशतैर्भूयः संशप्तकगणान्वशी ।
पातयामास संक्रुद्धः शतशोऽथ सहस्रशः ॥ १९
ततो रजतपुङ्खेन राज्ञः शीर्षं महात्मनः ।
मित्रदेवस्य चिच्छेद क्षुरप्रेण महायशाः ।
सुशर्माणं च संक्रुद्धो जत्रुदेशे समार्दयत् ॥ २०
ततः संशप्तकाः सर्वे परिवार्य धनंजयम् ।
शस्त्रौघैर्ममृदुः क्रुद्धा नादयन्तो दिशो दश ॥ २१
अभ्यर्दितस्तु तैर्जिष्णुः शक्रतुल्यपराक्रमः ।
ऐन्द्रमस्त्रममेयात्मा प्रादुश्चक्रे महारथः ।
ततः शरसहस्राणि प्रादुरासन्विशां पते ॥ २२
ध्वजानां छिद्यमानानां कार्मुकाणां च संयुगे ।
रथानां सपताकानां तूणीराणां शरैः सह ॥ २३

C. 8. 1105
B. 8. 27. 23
K. 8. 18. 29

16 K4 reads $16^{ab}$ twice consecutively. — a) Ś1 K1.2 B8 विश्वक्सेनं; K4 (second time) विक्तेनं (sic). B8 om. from निर्भिन्नं (in $16^{a}$) up to $17^{d}$. D2 T1.3 G3 M2–4 सुनिर्विद्धं (for तु निर्भिन्नं). K4 (first time) Dn1 D8 T2 G1 M1 अथ दिव्यास्त्रविच्छूरो. — b) K4 (first time) Dn1 D8 जातामर्षो; V1 प्रेक्षयन्नो; B1.2.5 D2–4.7 T1.3 G2.3 M2–4 दृष्ट्वा पार्थो; B4 वीक्ष्य पार्थो; T2 G1 M1 जातमन्युर् (for प्रेक्ष्य पार्थो). — d) V1 B (B8 om.) Dn1 D2–4.6–8 S वारयित्वा (for दार°). V1 D2.6 T2 महारथं; B1.4 Da1 D1.5 °बलं; B2.5 Dn1 D3.4.7 T1 °रथः; T3 G3 °बली (for °बलः).

17 B3 om. 17 (cf. v. l. 16). — a) D6 M2–4 स; G1 तु (for सु-). — G2 om. (hapl.) from बाणैः (in $17^{a}$) up to °शतैर् (in $19^{a}$). K1 om. (hapl.) $17^{b}$–$18^{a}$. — b) Dn1 D6.8 राजंस् (for राज्ञस्). S (G2 om.) राजंस्तस्य महात्मनः. — c) T G1.3 M1.3 कुंडलोपहितं. Cc cites उपचितं. — d) K3 भृशमुत्तरं; V1 B2.5 Dn1 D2.6 पृतनामुखे; D1 पृष्टं स्तनांतरे (sic); T1 प्रहसन्निव T2.3 G1.3 M प्रहसञ्शिरः (for पृतनान्तरे).

18 G2 om. 18. K1 om. $18^{a}$ (cf. v. l. 17). — a) V1 B4.5 D2–4.6.7 निकृत्य (for निहत्य). — b) Ś K चित्रवर्माणम्. K3 T1 G1 M आहवे; V1 आक्षिणोत्; D6 अक्षिणोत्; T3 G3 एव च; Cc आक्षिपत् (as in text). — c) S (G2 om.) हत्वा च (for तीक्ष्णेन). — d) K3 Dn1 मारिषः.

19 G2 om. ततः शरशतैर् (cf. v. l. 17). — a) D8 शरैः शतं (before corr. शतं शरैर्). K3 om. भूयः. — b) Some MSS. संसप्तक-. V1 T2.3 G M1 बहून्; B Dn1 D2–4.7 बली (for वशी). — c) Ś K1.2.4 वै; D6 तान् (for सं-).

20 a) K1 V1 B2.3.5 D6 T G M1 राजतपुंखेन. — b) V1 B5 D2–4.7 राजन्; Dn1 राज-; D6 शिरस् (for राज्ञः). D6 तस्य (for शीर्षं). B2 महारथः (for °त्मनः). — c) B2.4 Da1 D2–4.7 S मित्रसेनस्य; B3 चित्रदेवस्य; B5 चित्रसेनस्य (for मित्रदेवस्य). — d) B5 D2–4.6.7 महारथः; M3.4 °त्मना (for °यशाः). — e) K1 स्वशर्माणं; K3 T2 सुवर्माणं (for सुशर्माणं). K1 च सत्क्रुद्धो; V1 B2.5 D3.4.6–8 T2 सुसंक्रुद्धो; D2 तु संक्रुद्धो; T1.3 G M ततः क्रुद्धो (for च संक्रुद्धो). — f) K1 B3 समाहरत्; K3 V1 B2.5 D T1 M °हनत्; B4 T2.3 G सम(B4 °मा)र्पयत् (for समार्दयत्). — After 20, S ins.:

160* नाराचेन सुतीक्ष्णेन सुमुक्तेन महायशाः।

21 a) Some MSS. संसप्तकाः. B4 संशप्तकगणाः सर्वे. — b) K4 धनंजयः (for °जयम्). — c) Dn1 शरौघैर्; G2 शस्त्रैर्वै (for शस्त्रौघैर्). Ś K1.2.4 ममृधुः; D8 (m as in text) ममृदुः; T2 बहुभिः (for ममृदुः). M4 क्रुद्धो (for क्रुद्धा).

22 a) K3 अत्यर्दितस्; D6 अभ्यर्दितैस् (for °र्दितस्). B3.5 तज्जिष्णुः (for तैर्जिष्णुः). S स तैरभ्यर्दितो जिष्णुः. — b) K1 D5 G2 -पराक्रमैः (D5 °माः). — c) T2 इंद्रम् (for ऐन्द्रम्). K3 अभेद्यात्मा (for अमेयात्मा). — e) K1 शत- (for शर-). — f) M1 प्रादुरासीद् (for °रासन्). — After 22, S ins.:

161* कार्मुकात्पाण्डुपुत्रस्य पार्थस्यामिततेजसः।

23 a) T1 M4 ततस्ते; T2.3 G ततस्तु; M1.3 ततस्तैश् (for ध्वजानां). — b) K1.3.4 Da1 Dn1 D1.3–5 कार्मुकानां. V1 B2.4.5 D2–4.6.7 मारिष (for संयुगे). S ध्वजानां धनुषां तथा. — K3 om. (hapl.) $23^{c}$–$24^{d}$. B3 om. $23^{cd}$. — c) Da1 D1.5 च; D2 सु- (for स-). — d) T2 तूणीरानां. K1 शतैः; B (B3 om.) D S युगैः (for शरैः).

गत्वा पितामहं देवं प्रसाद्यैवं वचोऽब्रुवन् ॥ ९७
देव त्वयेदं कथितं त्रिदशारिनिबर्हणम् ।
तथा च कृतमस्माभिः प्रसन्नो वृषभध्वजः ॥ ९८
रथश्च विहितोऽस्माभिर्विचित्रायुधसंवृतः ।
सारथिं तु न जानीमः कः स्यात्तस्मिन्रथोत्तमे ॥ ९९
तस्माद्विधीयतां कश्चित्सारथिर्देवसत्तम ।
सफलां तां गिरं देव कर्तुमर्हसि नो विभो ॥ १००
एवमस्मासु हि पुरा भगवन्नुक्तवानसि ।
हितं कर्तास्मि भवतामिति तत्कर्तुमर्हसि ॥ १०१
स देव युक्तो रथसत्तमो नो
दुरावरो द्रावणः शात्रवाणाम् ।
पिनाकपाणिर्विहितोऽत्र योद्धा
विभीषयन्दानवानुद्यतोऽसौ ॥ १०२
तथैव वेदाश्चतुरो हयाग्र्या
धरा सशैला च रथो महात्मन् ।
नक्षत्रवंशोऽनुगतो वरूथे
यस्मिन्योद्धा सारथिनाभिरक्ष्यः ॥ १०३
तत्र सारथिरेष्टव्यः सर्वैरेतैर्विशेषवान् ।
तत्प्रतिष्ठो रथो देव हया योद्धा तथैव च ।
कवचानि च शस्त्राणि कार्मुकं च पितामह ॥ १०४
त्वामृते सारथिं तत्र नान्यं पश्यामहे वयम् ।
त्वं हि सर्वैर्गुणैर्युक्तो देवताभ्योऽधिकः प्रभो ।

C. 8. 1527
B. 8. 34. 73
K. 8. 27. 11

---

[ए]नं (for [ए]वं). S महर्षिभिः (for वचोऽब्रुवन्).

98 Before 98, D8 ins. देवा ऊचुः. — a) K3 [ए]व; V1 Dn1 D6 यत् (for [इ]दं). B1.4.5 Da1 D1.3–5.7 S यथा त्व(S त्वया य)त्कथितं देव (T1 पूर्वं); D2 देवेश यत्त्वा कथितं. — b) Ś2 B1.4.5 Da1 D1.3–5.7 -विनिग्रहे; K3 V1 B2 Dn1 D2.8 S -निबर्हणे (K3 M1.2 °ण) (for -निबर्हणम्). — c) K3 V1 B2 D6.8 S तत् (for च). — d) K3 V1 B (B3 damaged) D S नो (K3 Dn1 D8 गो-; V1 D6 वै; D2 S च) वृषध्वजः (for वृषभ°).

99 a) M1 रथं. — b) B2 विचित्रांबरसंवृतः; Dn1 D2 T1 विचित्रायुधसंभृतः (D2 °निभः; T1 °युतः). — c) B2 सारथिस्; D6 सारथी. B1.4.5 Da1 D1.3–5.7 S (except T1) च (for तु). — d) G2 कस्मात् (for कः स्यात्). T1 अस्मिन्; G2 तस्माद् (for तस्मिन्). K3 कस्य कस्मिन्रथोत्तमः; T2 तस्मिन्रथवरोत्तमे.

100 a) G2 कामाद् (for तस्माद्). — b) B5 देवसत्तमः; T1 सुरसत्तम. G2 तव पुत्रस्य सत्तम. — c) B1 सफलितां (for सफलां तां). T1 हि (for तां). D8 चार्थितं; T3 G2.3 त्वाशिषं (for तां गिरं). — d) K3 M2 (before corr.). 3.4 ते (for नो). D2.8 प्रभो (for विभो).

101 T3 G2.3 om. 101ab. — a) D6 अस्मानपि (for °सु हि). Dn1 रिपुहा (for हि पुरा). — b) D8 M2–4 भगवान्. K4 वक्तुवान् (for उक्तवान्). Ś2 अपि (for असि). — c) B2.4 Dn1 D3.7 हित-; S एवं (for हितं).

102 a) K3 Da1 D1.5.8 रथसत्तमेन; Dn1 °सत्तमश्च; D2 °सत्तमो वो; S °सत्तमो वै. — b) Ś2 दुरायरो; K3 T1 °रोहो; V1 B4 m D2.6 T2 °सदो; B1.4.5 Da1 Dn1 D1.3–5.7.8 Cc °धरो; B2 T3 G °धर्षो; M3 °परो (for °वरो). — c) S पिनाकधन्वा (for °पाणिर्). — d) B2 om. (hapl.) from विभीषयन् up to योद्धा (in 103d). K2 मानवानुद्यतो; T1 दानवानंदतो (for °नुद्यतो).

103 B2 om. up to योद्धा (in 103d) (cf. v. l. 102). — a) V1 D1.5 T2 G1 देवाश्; D8 वेदांस्. S च रथे (for चतुरो). Cc cites चतुरः. D8 हयाग्र्यान्; G1 °ग्रा; G2 भयाग्र्या. — b) K3 V1 B1.4.5 D T G1.3 M महात्म(T2 °स्व)नः. G2 धराः सशैलश्च यमो महात्मनः. — c) K1.3.4 V1 B1.4.5 D S Ca नक्षत्रवंशा(K4 °शे)नुगतो (D3.7 °नुरथो; D4 °न्नुरथो) वरूथी. — d) K3 B1.4.5 Da1 Dn1 D1–7 हरो; D8 हारो हि (for यस्मिन्). Ś1 K2.4 V1 B (B3 damaged) D T3 G3 सारथिनां. ❀Cc: ना पुमान्।❀ K3.4 B1.4 Da1 Dn1 D1–7 T3 G3 अभिलक्ष्यः (K4 D2 Ca.c °क्षः); V1 अति लक्ष्यः; B5 अभिदृश्यः; D8 अस्ति लक्ष्यः; G2 अभिरथ्या (for °रक्ष्यः).

104 a) K1 तथा (for तत्र). Ś K2 इष्टव्यः; Cc एष्टव्यः (as in text). — b) V1 एव (for एतैर्). Ś2 B5 विशेषयन्; K3 °षतः; Ca.c °वान् (as in text). — c) Ś2 K1.4 तत्प्रविष्टो; K3 तत्प्रतिष्ठौ; Cc °ष्ठो (as in text). V1 B4 D6 तं प्रतिष्ठंरथं देव; Da1 D1.5 तत्प्रतिष्ठरथं देव; D8 प्रतिष्ठितो रथो देव; S तं (M4 सं-) प्रविष्टा रथं देवा (T1 G2 M3 °व; M4 °वं). — d) K1 हत-; B5 हरो (for हया). K3 योधा. V1 B1.4 Da1 D1.2.5.6 T2 हयान् (D2 हया) योद्धारमेव च; T1.3 G M रथयोद्धारमेव च. — e) Ś K2.4 समस्तानि; K1.3 B (B3 damaged) Da1 D1.3–5.7 सशस्त्राणि (for च शस्त्राणि). — f) K3 पितामहः; B2 D1 °महं.

105 G2 om. 105abcd. — b) K3 नाभ्य- (for नान्यं). — c) Ś1 K2.4 V1 B (B3 damaged) Da1 D1–7 T1.3 G2.3 सर्वगुणैर्. — d) K1.3 V1 B1.2.4 Dn1 D2–4.6.7 दैवतेभ्योधिकः; B5 दैवेभ्योप्यधिकः; Da1 D1.5 देवेभ्यो-

C. 8. 1527
B. 8. 34. 79
K. 8. 27. om.

सारथ्ये तूर्णमारोह संयच्छ परमान्हयान् ॥ १०५
इति ते शिरसा नत्वा त्रिलोकेशं पितामहम् ।
देवाः प्रसादयामासुः सारथ्यायेति नः श्रुतम् ॥१०६
ब्रह्मोवाच ।
नात्र किंचिन्मृषा वाक्यं यदुक्तं वो दिवौकसः ।
संयच्छामि हयानेष युध्यतो वै कपर्दिनः ॥ १०७
ततः स भगवान्देवो लोकस्रष्टा पितामहः ।
सारथ्ये कल्पितो देवैरीशानस्य महात्मनः ॥ १०८
तस्मिन्नारोहति क्षिप्रं स्यन्दनं लोकपूजिते ।
शिरोभिरगमंस्तूर्णं ते हया वातरंहसः ॥ १०९

---

स्यधिकः; T2 M देवताम्यधिकः. — After 105cd, S (G2 om. lines 1–6; M1 om. lines 10–12) ins.:

267* त्वं देव शक्तो लोकेऽस्मिंस्त्रियन्तुं प्रद्रुतानिमान् ।
वेदाश्वान्सोपनिषदः सारथिर्भव नः स्वयम् ।
योद्धुं बलेन सत्त्वेन वयसा विनयेन च ।
अधिकः सारथिः कार्यो नास्ति चान्योऽधिको भवान् ।
स भवांस्तारयत्वस्मान्कुरु सारथ्यमव्यय । [5]
भवानभ्यधिकस्त्वत्तो नान्योऽस्ति भविता त्विह ।
त्वं हि देवेश सर्वेस्तु विशिष्टो वदतां वर ।
तं रथं त्वं समारुह्य संयच्छ परमान्हयान् ।
तव प्रसादाद्वध्येयुर्देव दैवतकण्टकाः ।
स नो रक्ष महाबाहो दैत्येभ्यो महतो भयात् । [10]
त्वं हि नो गतिरव्यग्र त्वं नो गोप्ता महाव्रत ।
त्वत्प्रसादात्सुराः सर्वे पूज्यन्ते त्रिदिवे प्रभो ।

[(L. 1) T2 M1 लोकेश (for °केऽस्मिन्). — (L. 2) T G3 M1 वेदांश्च (for वेदाश्वान्). M2–4 सोपनिषदान्. — (L. 3) T1 G1 M2–4 योद्धुर्. T2 M1 वीर्येण सत्त्वेन; M2–4 सत्त्वेन वीर्येण (for सत्त्वेन वयसा). — (L. 4) T3 G3 को वा (for कार्यो). M2–4 भवेत् (for भवान्). — (L. 5) T1 तापयतु; T2 G3 तारयित्वा (for °यतु). — (L. 6) G1 भवादभ्यधिकस्. T1 M2–4 [इ]ह पितामह (for भविता त्विह). — (L. 7) T1 वरः. — (L. 8) Cf. 105ef. M1 त्वत् (for त्वं). G2 समवायवलान्हयान् (for the posterior half). — (L. 9) G1 वध्येरन्. T1 G2 M3 देवतकंटकाः (G2 °कान्); M1 देव कने प्रभो. — (L. 10) M2–4 महादेव (for °बाहो). — (L. 11) T1 G1 अव्यग्रा; M2–4 अप्यग्रा (for अव्यग्र).]

— S om. 105ef; K3 om. 105e. — e) Ś1 सरथ्ये; K1 सारथिं; V1 B (B3 damaged) Da1 Dn1 D1–7 स रथं; D8 सारथ्यं (for सारथ्ये). V1 B2.5 D2–4.6.7 आरुह्य (for आरोह). — After 105, N ins.:

268* जयाय त्रिदिवेशानां वधाय त्रिदशद्विषाम् ।

[B1.4 Da1 D1.5 त्रिदशेशानां (for त्रिदिवे°). K3 D8 त्रिदिवद्विषां.]

106 a) B4 तरसा; Co शिरसा (as in text). K3 B1.4 D (except D8) T2 M गत्वा; T3 G2.3 गच्छन् (for नत्वा). — b) B2 D1.3 त्रैलोक्ये(D3 °के)शं; T2 त्रिदशास्तं. B1 पितामहः. — After 106, V1 Da1 D1.5 ins. an addl. colophon. [*Adhy. name*: Da1 D1.5 त्रिपुरवधोपाख्यान.]

107 K3 B (B3 damaged) Da1 D1.5.8 भगवान्; Dn1 D2–4.6.7 पितामह (for ब्रह्मा). — After the ref., S ins.:

269* एवमेतत्सुरास्तथ्यं नान्यस्त्वभ्यधिको भवान् ।
सारथित्वं करिष्यामि शंकरस्य महात्मनः ।
सर्वथा रथिनः श्रेयान्कर्तव्यो रथसारथिः ।
तस्मादेतद्यथातत्त्वं ज्ञात्वा युष्मांश्च संगतान् ।
संगच्छामि हयानेष विबुधाः कालमर्दिने । [5]

[(L. 1) T3 G2.3 तस्य (for तथ्यं). T2 M1 भवात्; G1 M2–4 भवेत् (for भवान्).]

— a) D3 मुषा (for मृषा). D2 वाच्यं (for वाक्यं). — b) K3 V1 Da1 Dn1 D1.3 वै; B1.2.4 D3.4.6.7 त्रि- (for वो). — c) Da1 D1.5 महान् (for हयान्). K3 एव; Co एष (as in text). — d) D6 Co [अ]हं (for वै). — For 107, S subst.:

दुर्योधनः ।
270* एवमुक्त्वा जटाभारं संयम्य प्रपितामहः ।
परिधायाजिनं गाढं संन्यस्य च कमण्डलुम् ।
प्रतोदपाणिर्भगवानारुरोह रथं तदा ।

[(L. 2) G3 कमंडुलं. — (L. 3) T1 G2 तथा (for तदा).]

108 b) D2 लोकश्रेष्ठो (for °स्रष्टा). — c) V1 [अ]-कल्पयन्; T2 G1.2 M1 कल्पिते (M1 °ता); Co °तः (as in text).

109 a) Ś रथं (for क्षिप्रं). — b) Ś2 V1 B2.4 Dn1 D3.4.6–8 स्यंदने. K3 B1.5 Da1 D1.5 लोकपूजितं. S कल्पितं लोकसंभू(T2 °वृ)तं. — c) S पतिता (for अगमन्). V1 B (B3 damaged) D (except Dn1 D8) S भूमिं (T3 G1.3 °मौ) (for तूर्णं). — d) S तुरगा वेदसंभवाः. — V1 B1.4 Dn1 D2–8 ins. after 109: Ś1 B5 Da1 D1 after 111:

271* आरुह्य भगवान्देवो दीप्यमानः स्वतेजसा ।

महेश्वरे त्वारुहति जानुभ्यामगमन्महीम् ॥ ११०
अभीशून्हि त्रिलोकेशः संगृह्य प्रपितामहः ।
तानश्वांश्चोदयामास मनोमारुतरंहसः ॥ १११
ततोऽधिरूढे वरदे प्रयाते चासुरान्प्रति ।
साधु साध्विति विश्वेशः स्मयमानोऽभ्यभाषत ॥ ११२
याहि देव यतो दैत्याश्चोदयाश्वानतन्द्रितः ।
पश्य बाह्वोर्बलं मेऽद्य निघ्नतः शात्रवान्रणे ॥ ११३
ततस्तांश्चोदयामास वायुवेगसमाञ्जवे ।
येन तत्त्रिपुरं राजन्दैत्यदानवरक्षितम् ॥ ११४
अथाधिज्यं धनुः कृत्वा शर्वः संधाय तं शरम् ।
युक्त्वा पाशुपतास्त्रेण त्रिपुरं समचिन्तयत् ॥ ११५
तस्मिन्स्थिते तदा राजन्क्रुद्धे विधूतकार्मुके ।

C. 8. 1563
B. 8. 34. 107
K. 8. 27. 30

---

[ D8 प्रारोहद् ( for आरुह्य ).]

B1.4 D cont.: V1 ins. after 111: B2 after 110:

272* अभीषून्हि प्रतोदं च संजग्राह पितामहः ।

[ D2.6 अभीष ( D6 °षु ); D8 अभिशुं; Ca °षून् ( as above ). D2.6.8 च ( for हि ). D2 प्रतोदे; Ca °दं ( as above ).]

110 K1 B1.4 D2–8 T G M1. om. 110: V1 reads (in marg.) 110 after 271*. Dn1 reads 110–111 after line 4 of App. I (No 3). — a) V1 रोहयति; B2.5 Da1 D1 त्वारोहति. — For 110, T G M1 subst.:

273* उभाभ्यां लोकनाथाभ्यामास्थितं रथसत्तमम् ।
वोढुं न शक्ता वेदाश्वा जानुभ्यामपतन्महीम् ।

[ (L. 2) T3 G3 वेदाश्व ( for °श्वा ). G2 सोढुं न शक्ता वेदाश्व ( for the prior half ). T1 अगमन् ( for अपतन् ).]

111 Ś2 K1 B1.4 Dn1 D2–4.6.7 om. (? hapl.) 111. B2 om. 111ab. V1 reads 111 in marg. D8 reads 111 after line 4 of App. I (No 3). — a) K2 V1 B3.5 Da1 D1.5.8 S अभीषून्. Ś1 K4 अपि लोकेशः; K3 त्रिदिवेशेशः; B5 हि त्रिलोकेशं. — b) D8 संयम्य ( for संगृह्य ). Ś1 K4 तु ( for प्र- ). — For 111, S subst.:

274* अभीशुभिस्तु भगवानुद्यम्य च हयान्विभुः ।
अस्तु वीर्यं च शौर्यं च वेदाश्वानामिति प्रभुः ।
रथं संचोदयामास देवानां प्रभुरव्ययः ।

[ (L. 1) T1.3 G3 च; G2 स ( for तु ). — (L. 3) G2 वेदानां ( for देवानां ).]

— After 111, K4 V1 B1.4.5 D ins. a passage given in App. I (No. 3).

112 a) B1 M1 विरूढे ( for ऽधिरूढे ). — b) T2 सन्नद्धे ( for प्रयाते ). T1.3 G M रथं पशुपति( M1 °ते )स्तदा. — c) K3 Da1 D1.2.5 G2 M1 देवेशः ( D2 G2 M1 °श ); K4 विश्वेशं; T3 G1.3 M2–4 देवेशं. — d) Ś2 K4 स्तूयमानो ( for स्मय° ).

113 a) K3 T2 दैत्यांस्. — b) B1 [अ]स्मान् ( for [अ]श्वान् ). T1.3 G अरिंदम ( G1.2 °मः ); M अतंद्रियः ( for अतन्द्रितः ). — d) K3 निघ्नतः ( for निघ्नतः ). D3 शात्रवं.

114 B3 resumes. — a) K3 V1 B D3.4.6–8 S ततोऽश्वांश्; D2 ततस्ते ( for °स्तांस् ). D2.3 नोदयामास ( for चोद° ). — b) K3 V1 B D S मनोमारुत( M1 °मानस )रंहसः. — After 114ab, T2.3 G1.3 M ins.:

275* पुराण्युद्दिश्य खस्थानि दानवानां तरस्विनाम् ।

— c) D3 यत्; D4 तं ( for तत् ). Da1 D1.5 वै तत्पुरं ( for तत्त्रिपुरं ). K3 जघ्ने ( for राजन् ). — d) B5 Da1 D1.5 दैत्यदानवपूजितं. — For 114cd, S (except T2) subst.:

276* ततस्ते सहसोत्पत्य वेदाख्या रथवाजिनः ।
क्षणेन तानि दैत्यानां पुराणि प्रापयन्प्रभुम् ।

[ (L. 1) T1 G1.2 M2–4 तरसा ( for सहसा ). T1.3 G3 M2–4 रथमादाय वाजिनः ( for the posterior half ). — (L. 2) T2 M1 तेन ( for तानि ). T2 M1 हरं ( for प्रभुम् ).]

— After the above, S reads 80ab (with v. l.). — After 114, Ś K V1m B2.4.5 Da1 Dn1 D1.3–5.7.8 ins.:

277* पिबद्भिरिव चाकाशं तैर्हयैर्लोकपूजितैः ।
जगाम भगवान्क्षिप्रं जयाय त्रिदिवौकसाम् ।

[ (L. 1) Ś K1.2.4 Dn1 B2 लोकपूजितः.]

— After 277*, K3.4 V1 B (except B2) D (except D8) T2 ins. a passage given in App. I ( No. 4 ).

115 a) B2 अथासह्यं ( for °धिज्यं ). K3 स्वधनुः (hypermetric) ( for धनुः ). — b) B3 सर्वायसं ( for संधाय तं ). K3 समारोप्य च तं शरं. — c) B1.3.4 G1 युक्तं; D4 मुक्त्वा; D6 T2 युंक्त्वा. D8 पाशुपतास्त्राणि; G2 °पदास्त्रेण. — d) T1 ते पुरं ( for त्रिपुरं ). G2 स तु चिंतयन् ( for समचिन्तयत् ).

116 a) G1 अस्मिन्. B2 हि ते ( for स्थिते ). T3 G ततो ( for तदा ). V1 B D2–4.6.7 T1 M3 महाराज ( B2 °जन् ) ( for तदा राजन् ). — b) K3 V1 B D S रुद्रे ( for क्रुद्धे ). Ś K1.2 विद्रु( Ś1 °श्रु-; Ś2 °ध्र )तकार्मुकः; K3 च धृतकार्मुके; Dn1 S वितत° ( for विधूत° ). — c) K4 पुराणे. V1 त्रीणि; Da1 D1.5 S (except T2) तेन ( for तानि ). — d) Ś K2.4 B1–3.5 Dn1 D2–4.7 ए( Ś2 K4 चै )वैकतां; K1 D8 एकत्रतां; B4 एकत्वती; B4m एकैकतां; Da1 D1.5

C. 8. 1563
B. 8. 34. 108
K. 8. 27. 30

पुराणि तानि कालेन जग्मुरेकत्ववतां तदा ॥ ११६
एकीभावं गते चैव त्रिपुरे समुपागते ।
बभूव तुमुलो हर्षो दैवतानां महात्मनाम् ॥ ११७
ततो देवगणाः सर्वे सिद्धाश्च परमर्षयः ।
जयेति वाचो मुमुचुः संस्तुवन्तो मुदान्विताः ॥११८
ततोऽग्रतः प्रादुरभूत्त्रिपुरं जघ्नुषोऽसुरान् ।
अनिर्देश्योग्रवपुषो देवस्यासह्यतेजसः ॥ ११९
स तद्विकृष्य भगवान्दिव्यं लोकेश्वरो धनुः ।
त्रैलोक्यसारं तमिषुं मुमोच त्रिपुरं प्रति ।
तत्सासुरगणं दग्ध्वा प्राक्षिपत्पश्चिमार्णवे ॥ १२०
एवं तत्त्रिपुरं दग्धं दानवाश्चाप्यशेषतः ।
महेश्वरेण क्रुद्धेन त्रैलोक्यस्य हितैषिणा ॥ १२१
स चात्मक्रोधजो वह्निर्हाहेत्युक्त्वा निवारितः ।
मा कार्षीर्भस्मसाल्लोकानिति त्र्यक्षोऽब्रवीच्च तम् १२२

Cc एकात्मतां; Ca एकत्ववतां (as in text). V1 D6 S जग्मुरेकत्वमाशु वै (V1 D6 °मप्यथ).

117 a) B1 एकीभागं (for °भावं). — b) K3.4 V1 B D S त्रिपुरत्वमुपागते (D2 °त्वमुपागमे; D8 °त्वं समागते). — c) Some MSS. तुमलो. D8 बभूव त्रिषु लोकेषु. — d) K V1 B3–5 Da1 Dn1 D1.2.4 S देवतानां. D8 हर्षो मनसि सर्वतः.

118 d) D8 संतुष्टास्ते (for संस्तुवन्तो). K3 B Da1 Dn1 D1.3–5.7.8 S महेश्वरं; V1 D2.6 मुदायुताः (for °न्विताः).

119 a) Ś K1.2.4 भवः; G2 [अ]ग्रश्च (for ऽग्रतः). B2 ते सुरास्त्रिदिवं जग्मुः; D8 ततो दृष्टिपथं प्राप्तं. — b) K2 जघ्नु*; K3 जग्मुषो; B3 D2–4.7.8 (marg. sec. m.) निघ्नतो (for जघ्नुषो). V1 D6 पुरं; B4 असुराः; Dn1 धनुः; T2 परं; G2 पुरा (for ऽसुरान्). Ś1 त्रिपुरं जघ्नुरासुरान्; Ś2 K4 जघ्नि(K4 °घ्नि)वांस्त्रिपुरासुरान् (sic); B2 प्रादुरासंस्ततोग्रतः. — c) K3 (before corr. as in text) अनिर्दिश्यं च धनुषो; V1 S °र्देश्याग्र(T1 °स्त्र-; T2 M2–4 °श्य)वपुषो. Ca.c cite अनिर्देश्यं. — d) T1 महता (for देवस्य). K4 [अ]सह्यतेजस्विता (sic); B2 [अ]मिततेजसः; Dn1 [अ]-सह्यते धनुः (sic); T1 [अ]सय्यतेजसा (sic). — After 119, S ins.:

278* त्रीणि दृष्ट्वैकसंस्थानि पुराण्यथ पिनाकधृक् ।

[T1 तृणे (for त्रीणि). T2 दृष्ट्वा च स्वस्थानि; G2 दृष्ट्वैव सं° (for दृष्ट्वैकसंस्थानि). T2 पुराण्येव (for °ण्यथ).]

120 b) G2 लोकेश्वरं. — c) D1.5 त्रिलोकसारं. — After $120^{cd}$, K4 V1 B Dn1 D1.3–7 T2 ins.:

279* उत्सृष्टे वै महाभाग तस्मिंस्त्रिपुवरे तदा ।
महानार्तस्वरो ह्यासीत्पुराणां पततां भुवि ।

[(L. 1) B2 उत्सृज्य (for उत्सृष्टे). V1 D6 च (for वै). V1 B4.5 Da1 Dn1 D1 महाभागे. — (L. 2) Dn1 नादोस्थिरो (for आर्तस्वरो). B1 नासीत् (for ह्या°). B4 आर्तनाद महानासीत् (for the prior half). V1 पततं (for पततां).]

T2 (om. line 4) cont.: T1.3 G M ins. after $120^{cd}$:

280* एकबाणेन तद्देवस्त्रिपुरं परमेश्वरः ।
निजघ्ने सासुरगणं देवदेवो महेश्वरः ।
बाणतेजोग्निदग्धे तत्प्रविशीर्णं सहस्रधा ।
महदार्तस्वरं कृत्वा नावशेषमुपागतम् ।

[(L. 1) T3 G3 तं (for तद्). — (L. 2) G2 सासुरगणान्. — (L. 3) T3 G3 प्रविकीर्णं (for प्रविशीर्णं).]

— e) K4 V1 B1 Da1 Dn1 D1–7 T2 तान्सोसुरगणान् (D1 °गुणान्; T2 °गुणं); B2 तच्चासुरगणं; B3.4 तं सोसुरगणं; B5 ततोसुरगणं. V1 D6 दग्धान् (for दग्ध्वा). Ś K1.2 तस्मात्सुरगणं दृष्ट्वा; T1.3 G M मद्देश सासुरगणं. — f) K1 प्राक्षिपन्; T1.3 G M1–3 प्रापतत्; M4 प्राविशत्. Da1 D1.5 (marg. as in text) पश्चिमान्भुवि (for °मार्णवे).

121 a) K3 V1 B2.3 D2–4.7 तु; B1.4 तं; T1 G हि (for तत्). T2 दग्ध्वा (for दग्धं). — b) Dn1 T2 दानवांश्च. K3 Dn1 T2 विशेषतः; B (except B2) [अ]-प्यशेषिताः; Cc अपोशिताः (for °शेषतः). D8 दानवानां दुरात्मनां. — c) Dn1 महेश्वरस्य (for °श्वरेण).

122 a) K3 चात्मको ध्वजो; V1 Dn1 D2.6 °क्रोधजं. V1 D2.6 वह्निं. — b) D3 दाहेत्युक्त्वा; D6 हा ते°; S दहे-(T1 °ह)त्युक्तो (for हाहेत्युक्त्वा). Ca cites हा हा (as in text). V1 Dn1 D2.6 निवार्य च; D8 [अ]भिवारितः; G2 [अ]स्ति शरतः (for निवारितः). — After $122^{ab}$, S ins.:

281* त्रैलोक्यमवशेषेण पुनर्दग्धुं प्रचक्रमे ।
कालाग्निमिव निर्दग्धुमुत्थितं तं पुनः पुनः ।

[(L. 1) T3 G1.3 अविशेषेण; G2 अपि नो यस्य. T2 पुरं; G2 तापं (for पुनर्). — (L. 2) T2 कालाग्निर्. G2 दग्धं तम् (for निर्दग्धुम्). T1 तु; M2–4 तत् (for तं).]

— c) K3 G2 कार्षीद्. Ś K2.4 लोकं; D5 लोकाद् (for लोकान्). — d) K3 द्रुतं; B5 Da1 Dn1 D1.5 S वचः (for च तम्).

123 b) D4.6 T1 G1 देवलोकास्. K1.3 V1 B Da1 D1–5.7 T2.3 G3 M2–4 त्वथर्षयः; D2 त्वधर्षभाः; D6 महर्षयः;

ततः प्रकृतिमापन्ना देवा लोकास्तथर्षयः ।
तुष्टुवुर्वाग्भिरर्थ्याभिः स्थाणुमप्रतिमौजसम् ॥ १२३
तेऽनुज्ञाता भगवता जग्मुः सर्वे यथागतम् ।
कृतकामाः प्रसन्नेन प्रजापतिमुखाः सुराः ॥ १२४
यथैव भगवान्ब्रह्मा लोकधाता पितामहः ।
संयच्छ त्वं हयानस्य राधेयस्य महात्मनः ॥ १२५

त्वं हि कृष्णाच्च कर्णाच्च फल्गुनाच्च विशेषतः ।
विशिष्टो राजशार्दूल नास्ति तत्र विचारणा ॥ १२६
युद्धे ह्ययं रुद्रकल्पस्त्वं च ब्रह्मसमोऽनघ ।
तस्माच्छक्तौ युवां जेतुं मच्छत्रूंस्ताविवासुरान् ॥ १२७
यथा शल्याद्य कर्णोऽयं श्वेताश्वं कृष्णसारथिम् ।
प्रमथ्य हन्यात्कौन्तेयं तथा शीघ्रं विधीयताम् ।

C. 8. 1579
B. 8. 34. 123
K. 8. 27. 45

---

D8 ऋषीश्वरः; M1 तथार्षयः. — c) K1 अष्टाभिः; K8 D8 इष्टाभिः; V1 Da1 D1.5 उग्राभिः; B Dn1 D2–4.6.7 S अग्र्या-(G1 °ग्रा)भिः (for अर्थ्याभिः). — d) Ś K2.4 शंभुम् (for स्थाणुम्). T3 G त्रिपुरवैरिणं (for अप्रतिमौजसम्).

124 a) K8 तेनाहुताः; V1 अनुज्ञांता (for तेऽनु°). — b) S (except T2) transp. जग्मुः and सर्वे. — c) B Da1 D1.3–8 प्रयत्नेन; T2 प्रसन्नास्ते (for °न्नेन). K8 कृतकामप्रयत्नेन. — After 124, N (D1, the prior half of line 1 only) T2 ins.:

282* एवं स भगवान्देवो लोकस्रष्टा महेश्वरः ।
देवासुरगणाध्यक्षो लोकानां विदधे शिवम् ।

[(L. 1) Ś2 भगवन्. Ś2 V1 लोके स्रष्टा; D8 लोककर्ता. — (L. 2) T2 देवः (for देवा-). K3 शिवः; Cc शिवम् (as above).]

125 D1 om. 125ab. — a) Ś1 K V1 तथैव. D8 धाता (for ब्रह्मा). S (except T2) एवं रुद्र(T3 ईश)स्य कृतवान्. — b) D8 (marg. as in text) लोकब्रह्मा; T2 °हेतोः (for °धाता). S (except T2) सारथ्यं प्र(T3 G1.3 तु)पितामहः. — After 125ab, K3 V1 B D (D1 om.) T2 M ins.:

283* सारथ्यमकरोत्तत्र रुद्रस्य परमोऽव्ययः ।
तथा भवानपि क्षिप्रं रुद्रस्येव पितामहः ।

[(L. 1) K3 D5 (before corr.) परमाव्ययः; D8 (*sup. lin.*) °मार्थतः. — For line 1, M subst.:

284* स्वयं लोकत्रयं स्रष्टा लोकानां हितकाम्यया ।

— (L. 2) K3 तथापि भगवान्क्षिप्रं (for the prior half). K3 रुद्रस्यैव.]

— c) Ś2 K1.3 V1 B D T2 संयच्छतु हयान्; T1.3 G M संयच्छ तुरगान्.

126 a) Ś2 कृष्णश्च कर्णश्च; K1 कृष्णाश्च कर्णाश्च. T2 पार्थं कृष्णो यथा पाति. — b) K3.4 V1 B D (except D5) फाल्गुनाच्च (K3 °नस्य; K4 °नश्च); T2 त्वं हि कर्णं. T1.3 G M गुणाधिकः; Cc विशेषतः (as in text). — After 126ab, S (except T2; G1 M om. line 2) ins. (cf. 287*):

285* बलतो रूपतो योगादस्त्रसंपद एव च ।
समासक्तं महीपाल कुरु मे हितमीप्सितम् ।

— S (except T2) om. 126cd. — d) V1 Dn1 D6 T2 मेत्र; Da1 D1.5 तेत्र (for तत्र).

127 a) D8 रुद्रसमस्. V1 Dn1 D2.6 T2 युद्धे रुद्रसमः कर्णः. — b) B1 नयः; B2–5 Da1 D1.3–5.7 T3 G M नये (for ऽनघ). — c) Ś K1.2.4 V1 B (except B5) Dn1 D2–4.6.7 T2 शक्तो भवान्; D8 शक्तो युधा (for शक्तौ युवां). — d) D8 मच्छत्रुं. N (except K3 D8) T3 G3 M1 तानिव; T2 स इव (for ताविव). T1 शत्रूंस्ताविव चासुरान्; G2 शत्रूंश्चापिवचासुरान् (sic).

128 a) T1.3 G M स यथा शल्य कर्णोयं; T2 यथा शल्य स कर्णोयं. — c) T2 शीघ्रं हन्याच्च कौंतेयं. — d) S (except T1) नीतिर् (for शीघ्रं). — After 128cd, V1 B2 Dn1 D2.6 T2 ins.:

286* त्वयि मद्रेश राज्याशा जीविताशा तथैव च ।
विजयश्च तथैवाद्य कर्णसाचिव्यकारितः ।

[(L. 2) T2 विजयस्य. Dn1 D2 कर्णसारथ्य(D2 °थि)-कारितः. — After line 2, T2 ins. an addl. colophon for which see below.]

On the other hand, T1.3 G M ins. after 128cd:

287* त्वया राज्यं सुखं चैव जीवितं जयमेव च ।
समासक्तं महीपाल कुरु मे हितमीप्सितम् ।
संयच्छास्य हयान्राजन्मत्प्रियार्थं परंतप ।
Colophon.

[(L. 1) G1 M1.2.4 त्वयि (for त्वया). G1.2 M जय (for जयम्). — (L. 3) G1 परंतपः. — (Colophon) T2 ins. it after 286* — *Adhy. name:* T1.2 M1 त्रिपुरदहनं. — *Adhy. no.:* T1.3 G M 27; T2 29.]

— T1.3 G M om. 128ef. — e) B2 कर्णं च; D2 कर्णस्य; T2 कर्णौं च. — After 128, N T2 ins.:

288* विजयश्चैव संग्रामे संयच्छाद्य हयोत्तमान् ।

[T2 विजयस्य. Ś K2.4 तव; D8 चास्य; T2 एव (for चैव). V1 संयम्य (for संयच्छ). K2–4 V1 B3.4 Da1 Dn1 D1.5.6.8 [अ]स्य (for [अ]द्य).]

C. 8. 1579
B. 8. 34. 124
K. 8. 27. 46

त्वयि कर्णश्च राज्यं च वयं चैव प्रतिष्ठिताः ॥ १२८
इमं चाप्यपरं भूय इतिहासं निबोध मे ।
पितुर्मम सकाशे यं ब्राह्मणः प्राह धर्मवित् ॥ १२९
श्रुत्वा चैतद्वचश्चित्रं हेतुकार्यार्थसंहितम् ।
कुरु शल्य विनिश्चित्य मा भूदत्र विचारणा ॥ १३०
भार्गवाणां कुले जातो जमदग्निर्महातपाः ।
तस्य रामेति विख्यातः पुत्रस्तेजोगुणान्वितः ॥ १३१
स तीव्रं तप आस्थाय प्रसादयितवान्भवम् ।
अस्त्रहेतोः प्रसन्नात्मा नियतः संयतेन्द्रियः ॥ १३२
तस्य तुष्टो महादेवो भक्त्या च प्रशमेन च ।
हृद्गतं चास्य विज्ञाय दर्शयामास शंकरः ॥ १३३

ईश्वर उवाच ।

राम तुष्टोऽस्मि भद्रं ते विदितं मे तवेप्सितम् ।
कुरुष्व पूतमात्मानं सर्वमेतदवाप्स्यसि ॥ १३४
दास्यामि ते तदास्त्राणि यदा पूतो भविष्यसि ।
अपात्रमसमर्थं च दहन्त्यस्त्राणि भार्गव ॥ १३५
इत्युक्तो जामदग्न्यस्तु देवदेवेन शूलिना ।
प्रत्युवाच महात्मानं शिरसावनतः प्रभुम् ॥ १३६
यदा जानासि देवेश पात्रं मामस्त्रधारणे ।
तदा शुश्रूषतेऽस्त्राणि भवान्मे दातुमर्हति ॥ १३७

दुर्योधन उवाच ।

ततः स तपसा चैव दमेन नियमेन च ।
पूजोपहारबलिभिर्होममन्त्रपुरस्कृतैः ॥ १३८
आराधयितवाञ्शर्वं बहून्वर्षगणांस्तदा ।
प्रसन्नश्च महादेवो भार्गवस्य महात्मनः ॥ १३९
अब्रवीत्तस्य बहुशो गुणान्देव्याः समीपतः ।

---

129 Before 129, S ins. दुर्योधन उवाच. — $^{a}$) $K_4$ $Dn_1$ $T_3$ $G_3$ इदं (for इमं). $D_{3.4.7}$ प्राप्य परं; $D_8$ चापि परं. $T_2$ अपरं तु प्रवक्ष्यामि. — $^{b}$) $T_2$ पुरातनं (for निबोध मे). — $^{c}$) $G_2$ सकाशेन. $K_3$ $V_1$ $B_{2,3.5}$ $Dn_1$ $D_{2-4.7}$ $T_2$ यद्; $M_3$ त्वं (for यं).

130 $^{a}$) $M_4$ कृत्वा (for श्रुत्वा). $Dn_1$ $D_4$ वैतद्; $D_8$ [ए]तच्च (by transp.). $K_3$ वयं (for वचश्). $G_2$ श्रुत्वा (for चित्रं). — $T_2$ om. $130^{bc}$. — $^{b}$) S ($T_2$ om.) हेतुकार्यार्थ($G_2$ °र्थं च)तत्त्ववित्; Co as in text. — $^{d}$) $Ś_2$ $D_{4.8}$ तत्र; $V_1$ $D_{2.6}$ काचिद्; $B_2$ तस्य (for अत्र).

131 $^{b}$) $K_1$ जामदग्निर्. $B_{2.3}$ $D_{3.4.7}$ महायशाः (for °तपाः). — $^{c}$) $V_1$ $D_6$ तस्य राम इति ख्यातः. — $^{d}$) $B_2$ °बलान्वितः (for °गुणा°).

132 $^{a}$) $Ś_2$ स तीव्र-; $V_1$ सुतीव्रं. $D_8$ व्रतम् (for तप). — $^{b}$) $K_1$ भवान्; $D_8$ प्रभुं. $V_1$ $D_{2.6}$ प्रसादयति शंकरं; $T_{2.3}$ $G_{1.3}$ संप्रसादिनान्भवं (sic). — $^{c}$) $G_2$ प्रसक्तानि (for °न्नात्मा). — $^{d}$) $M_1$ नियतं. $K_3$ $D_{2.8}$ सं($K_3$ स)जितें-द्रियः; $G_2$ संमि°; $M_1$ सर्वे° (sic).

133 $^{b}$) $B_3$ भक्त्या प्रशर्मेनेन च. — $^{c}$) $T_2$ विचित्रं चास्य विजयं. — After 133, S (except $T_1$) ins.:

289* प्रत्यक्षेण महादेवः स्वां तनुं सर्वशंकरः।

134 $G_{1.2}$ $M_{2-4}$ om. the ref. $K_3$ $B_{1.3.4}$ $Da_1$ $Dn_1$ $D_{1-7}$ महेश्वर; $V_1$ $B_{2.5}$ $T_{1.3}$ शंकर; $D_8$ रुद्र; $T_2$ देव (for ईश्वर). — $^{a}$) $K_1$ नाम (for राम). — $^{b}$) $V_1$ च (for मे). $D_5$ मे तवेषितं; $T_{1.3}$ G तव चेप्सि($T_3$ $G_3$ °ष्टि)तं. — $Ś_1$ reads $134^{cd}$ on marg. — $^{c}$) $T_1$ च वचो मह्यं; $M_1$ धूतपाप्मानं (for पूतमात्मानं). $G_2$ कुरुष्व मे तदात्मानं (sic). — $^{d}$) $D_8$ भविष्यति (for अवाप्स्यसि).

135 $^{a}$) $K_{2.4}$ $T_{1.3}$ तदस्त्राणि; $V_1$ $Da_1$ $D_{1.5.6}$ महा°; $G_1$ ममा°. — $^{b}$) $T_1$ $G_3$ भूतो (for पूतो). $B_2$ $Dn_1$ $D_4$ भविष्यति. — $^{c}$) $K_3$ अद्य त्वाम्; $K_4$ अपूतम्; $B_2$ अपारम् (for अपात्रम्).

136 $^{ab}$) $V_1$ [अ]सौ; $B_1$ च (for तु). $B_3$ $D_{2.6}$ transp. जामदग्न्यस्तु and देवदेवेन. — $^{d}$) $T_1$ वंद्य तं (for [अ]वनतः). $D_1$ प्रभुः; $M_{2-4}$ प्रभो (for प्रभुम्).

137 Before 137, $G_1$ ins. रामः. — $^{a}$) $K_{1.2}$ जानामि; B (except $B_2$) $Da_1$ $D_{1.3-5.7}$ जानाति. $B_{1.4.7}$ $Da_1$ $D_{1.3-5.7}$ देवेशः; $B_3$ [अ]पात्रं मां; $Dn_1$ मां देव. — $^{b}$) Ś K $B_2$ प्राप्तं; Ca, c पात्रं (as in text). $D_8$ यम् (for माम्). $K_4$ $T_1$ अस्त्रधारिणे. $B_3$ शस्त्रास्त्रधारणे तदा; $Dn_1$ प्राप्तमस्त्रविधारणे. — $^{c}$) $T_1$ तथा (for तदा). $K_3$ $V_1$ $B_2$ $Dn_1$ $D_2$ $T_1$ शुश्रूषवे; $K_4$ °यते; $D_6$ °न्य च; $M_{2-4}$ °षतो; Co °षते (as in text). $B_3$ शुश्रूषते मे शस्त्राणि. — $^{d}$) $V_1$ $D_6$ भगवन्; $B_3$ भवान्वै (for भवान्मे). $K_{1.3.4}$ $V_1$ $B_1$ $Da_1$ $D_{2.6.8}$ $T_2$ $G_2$ $M_{2-4}$ अर्हसि.

138 S (except $T_2$) om. the ref. — $^{b}$) $V_1$ शमेन; $T_{1.3}$ G M व्रतेन (for दमेन). $T_2$ शमेन च दमेन च. — $^{c}$) $V_1$ $D_6$ जपो° (for पूजो°). Ca as in text. — $^{d}$) $K_2$ होममंत्रैः (for होममन्त्र-). $K_3$ -परिस्कृतैः; $B_{2.4}$ -पुरस्कृतः.

139 $^{a}$) $K_4$ आधारयतवान्; $T_3$ $G_{1.3}$ समाराधितवान्. $V_1$ $D_{2.6}$ आराधयति ($D_2$ °यंति; $D_6$ °यत) देवेशं; $T_2$ आराध-

भक्तिमानेष सततं मयि रामो दृढव्रतः ॥ १४०
एवं तस्य गुणान्प्रीतो बहुशोऽकथयत्प्रभुः ।
देवतानां पितॄणां च समक्षमरिसूदनः ॥ १४१
एतस्मिन्नेव काले तु दैत्या *आसन्महाबलाः ।
तैस्तदा दर्पमोहान्धैरबाध्यन्त दिवौकसः ॥ १४२
ततः संभूय विबुधास्तान्हन्तुं कृतनिश्चयाः ।
चक्रुः शत्रुवधे यत्नं न शेकुर्जेतुमेव ते ॥ १४३
अभिगम्य ततो देवा महेश्वरमथाब्रुवन् ।
प्रसादयन्तस्तं भक्त्या जहि शत्रुगणानिति ॥ १४४

प्रतिज्ञाय ततो देवो देवतानां रिपुक्षयम् ।
रामं भार्गवमाहूय सोऽभ्यभाषत शंकरः ॥ १४५
रिपून्भार्गव देवानां जहि सर्वान्समागतान् ।
लोकानां हितकामार्थं मत्प्रीत्यर्थं तथैव च ॥ १४६
राम उवाच ।
अकृतास्त्रस्य देवेश का शक्तिर्मे महेश्वर ।
निहन्तुं दानवान्सर्वान्कृतास्त्रान्युद्धदुर्मदान् ॥ १४७
ईश्वर उवाच ।
गच्छ त्वं मदनुध्यानान्निहनिष्यसि दानवान् ।

C. 8. 1602
B. 8. 34. 144
K. 8. 28. 20

---

यित्वा शर्वं हि॰ — ᵇ) M2-4 संवत्सरान् (for वर्षगणान्). K3 T2 तथा. — ᵉ) V1 B3 स (for च). Ś K2.4 तदा देवो (for महादेवो).

140 ᵃ) K1 च तथा (for बहुशो). S (except T2) असकृच्चाब्रवीत्तस्य. — Ś K1.2 om. (hapl.) 140ᵇ–141ᵃ. — ᵇ) K3 समंततः; T3 G1.3 सकाशतः; M4 सदीप्तः (for समी°). — ᵈ) K4 मम (for मयि). V1 वीरो (for रामो).

141 Ś K1.2 om. 141ᵃ (cf. v. l. 140). — ᵃ) S (except T2) अस्य. D3 गुणैः (for गुणान्). T1 वीरो; T3 G1.3 देवो (for प्रीतो). — ᵇ) Ś2 प्रहसन् (for बहुशो). Ś K2 कथयन्. T3 G विभुः (for प्रभुः). T1 बहुशोक-भयाद्विभुः. — ᵈ) K1.4 V1 B (except B5) D (except Dn1 D3) T1.2 G1 M अरिसूदन.

142 Before 142, T1.3 G2.3 ins. दुर्योधनः. — ᵃ) K3 च (for तु). B3 एतच्चैवं तदा काले. — ᵇ) Ś K V1 B1.3-5 D S ह्य(Ś2 ह्य-; B3 Dn1 T2 चा)सन्; B2 ह्यान्यान् (for *आसन्). — ᶜ) K3 ते (for तैस्). K3 D3 T2.3 G M दर्पमोहाद्वै; B2 D2 °मोहाचैर् (D2 °च्चै); Dn1 T1 °मोहाभ्यां; (for °मोहान्धैर्). D6 तैस्तु दर्पममोहांधैः (sic). — ᵈ) V1 Dn1 D6 प्राबा(D6 °व)ध्यंत; B1.2 D3 अवध्यंत; D2 प्रबाध्यंते; D4 अबध्यंते; T2 प्रबोध्यंत (for अबा°).

143 ᵃ) G1 तत्र (for ततः). B2 संस्तूय (for संभूय). K4 विबुधान्; B2 विविधान्; G2 बहुलास्. V1 Dn1 D2.6 T2 ततस्ते विबुधाः सर्वे. — ᵇ) B2 हंत ते (for तान्हन्तुं). — ᶜ) Ś K1.2.4 शक्रवधे (for शत्रु°). G2 शक्रः शक्रवशे यत्नं (sic). — ᵈ) K1 शक्तेर् (for शेकुर्). B2 D6 हंतुम् (for जेतुम्). K3 V1 B D (except D3) तान् (for ते). S (except T2) न च जेतुमशक्नुवन्.

144 ᵃ) K3 अभितप्य; B2 अभ्यगच्छन् (for अभिगम्य). — ᵇ) T1 महादेवम् (for महेश्वरम्). V1 B D (except D3) S उमापतिं (for अथाब्रुवन्). — ᵉ) K1.3 B2.4 D3 प्र(D3 प्रा)सादयंतस्ते; V1 B1 Dn1 D2-4.6.7 S प्र(D2 G1 प्रा)सादयंस्तदा (T2 °था); B3.5 Da1 D1.5 प्रासादयंत ते (for प्रसादयन्तस्तं).

145 ᵃ) K1 परिज्ञाय. Dn1 तदा (for ततो). Ś2 देव. — ᵇ) B2 रिपुक्षये. T1 देवानां रिपुसंक्षयं. — ᶜ) Dn1 आसीनं; G2 आयाय (for आहूय). — ᵈ) Dn1 T2 प्रत्यभाषत; T1 सोह्या°; G2 अभ्य° (for सोऽभ्य°).

146 Before 146, Da1 D1.5 ins. रुद्र उवाच. — ᵇ) B2.4 D6.8 शत्रून् (for सर्वान्). — ᶜ) T1 M2-4 हितकाम्यार्थं. — ᵈ) V1 नः प्रीत्यर्थं; B2 प्रीत्यर्थं च; T1.2 G1.2 M मत्प्रियार्थं. — After 146, V1 B (except B3) Da1 D1-7 ins.:

290* एवमुक्तः प्रत्युवाच त्र्यम्बकं वरदं प्रभुम्।

While, Dn1 T2 ins. after 146:

291* एवमुक्तस्तु देवेन भार्गवः सुमहायशाः।
प्रत्युवाचाथ देवेशं शंकरं स कृताञ्जलिः।

[(L. 1) T2 तु (for स्तु-). — (L. 2) T2 च (for [अ]-थ).]

147 D3 om. (hapl.) 147, along with the ref. — ᵃ) Ś1 K1.2 V1 D2 अकृतार्थस्य; B (except B2) Da1 D1.3-5.7 S (except T2) का शक्तिर्मम. — ᵇ) K3 V1 B2 Dn1 D2.6 T2 मम संयुगे (for मे महेश्वर). B1.3.4.5 Da1 D1.3-5.7 T1.3 G M अ(T1 ह्य)कृतास्त्रस्य (T1 °स्तत्र) संयुगे. — ᶜ) K1 निहर्तुं.

148 D3 om. the ref. Ś1 K1-3 V1 B D (except D3) महेश्वर; Ś2 श्रीमहादेव; T1.3 M देव; T2 शंकर; G2 भव (for ईश्वर). — ᵃ) M1 गच्छध्वं. B Da1 D1.5.7 मदनुज्ञातो (for °ध्यानान्). — ᵇ) B2 निहनिष्यति; Da1

C. 8. 1602
B. 8. 34. 145
K. 8. 28. 20

विजित्य च रिपून्सर्वान्गुणान्प्राप्स्यसि पुष्कलान् ॥

दुर्योधन उवाच ।

एतच्छ्रुत्वा च वचनं प्रतिगृह्य च सर्वशः ।
रामः कृतस्वस्त्ययनः प्रययौ दानवान्प्रति ॥ १४९
अवधीद्देवशत्रूंस्तान्मददर्पबलान्वितान् ।
वज्राशनिसमस्पर्शैः प्रहारैरेव भार्गवः ॥ १५०
स दानवैः क्षततनुर्जामदग्न्यो द्विजोत्तमः ।
संस्पृष्टः स्थाणुना सद्यो निर्व्रणः समजायत ॥ १५१
प्रीतश्च भगवान्देवः कर्मणा तेन तस्य वै ।
वरान्प्रादाद्ब्रह्मविदे भार्गवाय महात्मने ॥ १५२
उक्तश्च देवदेवेन प्रीतियुक्तेन शूलिना ।
निपातात्तव शस्त्राणां शरीरे याभवद्रुजा ॥ १५३
तया ते मानुषं कर्म व्यपोढं भृगुनन्दन ।
गृहाणास्त्राणि दिव्यानि मत्सकाशाद्यथेप्सितम् ॥
ततोऽस्त्राणि समस्तानि वरांश्च मनसेप्सितान् ।
लब्ध्वा बहुविधान्रामः प्रणम्य शिरसा शिवम् १५५
अनुज्ञां प्राप्य देवेशाज्जगाम स महातपाः ।
एवमेतत्पुरावृत्तं तदा कथितवानृषिः ॥ १५६
भार्गवोऽप्यददात्सर्वं धनुर्वेदं महात्मने ।
कर्णाय पुरुषव्याघ्र सुप्रीतेनान्तरात्मना ॥ १५७

---

$D_{1.5}$ °निष्यामि. $K_3$ $V_1$ B D S शात्रवान् (for दानवान्). — $^{c}$) $K_1$ विचित्य. $T_1$ हि (for च). $B_1$ पुनः (for रिपून्). — $^{d}$) $K_4$ प्राश्यसि; $V_1$ आप्स्यसि (for प्राप्स्यसि).

149 Ś K (except $K_3$) $V_1$ B D (except $D_8$) om. the ref. — $^{a}$) $K_{1.3}$ $V_1$ B D (except $D_6$) $T_1$ $G_{1.2}$ M तु (for च). — $^{b}$) $B_4$ तु (for च). $K_1$ वर्चसः; $K_3$ $D_{n1}$ $D_8$ $T_2$ सत्वरः ($K_3$ °रं) (for सर्वशः).

150 $^{a}$) $K_1$ $V_1$ B D (except $D_8$) अब्रवीद् (for अवधीद्). S (except $T_2$) ततोवधीद्देवशत्रून्. — $^{b}$) $Ś_1$ $K_2$ दमदर्पबलान्वितान्; $Ś_2$ दददर्श° (sic); $K_3$ $D_{n1}$ $D_8$ $T_2$ मददर्पसमन्वितान्; $D_{1.4}$ $T_1$ मददर्थ($T_1$ °हर्ष)बलान्वितान्. — After $150^{ab}$, $V_1$ B D (except $D_8$) ins.:

292* मम युद्धं प्रयच्छध्वं दैत्या युद्धमदोत्कटाः ।
प्रेषितो देवदेवेन वो विजेतुं महासुराः ।
इत्युक्ता भार्गवेणाथ दैत्या युद्धं प्रचक्रमुः ।
स तान्निहत्य समरे दैत्यान्भार्गवनन्दनः ।

[(L. 1) $B_4$ युद्धवलोत्कटाः; $D_6$ युद्धे मदो°. — $B_2$ repeats lines 2–4 followed by 8. 24. 151–8. 25. 2 after 8. 25. 6. — (L. 2) $B_5$ महासुरान्. — (L. 3) $D_{a1}$ $D_1$ योद्धुं (for युद्धं). — (L. 4) $B_2$ निजघ्ने (for निहत्य).] — $^{c}$) $K_1$ $B_{2.3}$ $D_{n1}$ $D_{6.8}$ वज्रा($B_2$ शक्रा)शनिसमप्रख्यैः; $K_3$ विज्ञातानि समप्रख्यैः.

151 Ś $K_{1.2.4}$ om. $151^{ab}$. — $^{a}$) $D_{a1}$ $D_{1.5}$ क्षततनूर्; $D_{4.8}$ कृत्ततनुर्. — $^{b}$) S (except $T_2$) नृपोत्तम (for द्विजोत्तमः). — $^{c}$) $K_{1.4}$ स स्पृष्टः; $K_2$ संस्पृष्टाः; $B_2$ संप्रष्ट. $G_2$ संहृष्टः स्थाणुमासाद्य. — $^{d}$) $D_{n1}$ निर्विणः; $D_8$ $T_2$ निर्वृणः; $G_2$ निपुणः (for निर्व्रणः). $M_{2-4}$ समपद्यत (for °जायत).

152 $^{a}$) $K_3$ प्रीतः स; $T_2$ प्रीतत्तो (sic). $K_4$ एव (for देवः). — $^{b}$) $V_1$ $T_2$ transp. तेन and तस्य. — $^{c}$) $Ś_2$ ब्रह्मविदो; $K_1$ °विदां; $K_2$ ब्रह्मावि*; $K_3$ $V_1$ B D S बहुविधान्.

153 $^{a}$) $G_2$ उक्तं च. S (except $T_2$) प्रीतियुक्तेन (for देवदेवेन). — $^{b}$) $T_{1.3}$ G M देवदेवेन; $T_2$ प्रतियुक्तेन. — $^{c}$) Ś $K_{1.2.4}$ विपाका($Ś_2$ *sup. lin.* °ता)त्; $T_1$ विहितात्; $C_a$ निपातात् (as in text). $Ś_2$ $K_4$ $D_8$ (marg. as in text) शत्रूणां; $K_1$ शास्त्राणां. $D_2$ निपातास्त्रविशि*णां (sic). — $^{d}$) $K_3$ मा भवद्रुजाः.

154 $^{a}$) $K_3$ $T_2$ $G_{2.3}$ तथा ते; $B_2$ तयाति-; $D_1$ तमांते; $D_2$ तथा त्वं; $G_1$ मया ते. Ś $K_{1.2.4}$ नानुकंपस्व; $C_a$ मानुषं कर्म (as in text). — $^{b}$) Ś $K_{1.2.4}$ $T_1$ $G_2$ $C_c$ व्यपोहं; $K_3$ व्यापांडु (sic); $D_{a1}$ $D_1$ व्यापोढं; $D_7$ व्यपोढुं; $D_8$ (marg. as in text) व्यपोढं; $T_2$ नापोहद्; $T_3$ $G_3$ $M_1$ व्यपोहे ($M_1$ °हद्); $C_a$ व्यपोढं (as in text). — $^{d}$) $K_1$ $D_{n1}$ यथेप्सितान्.

155 Before 155, N $T_2$ ins. दुर्योधन उवाच. — $^{a}$) S (except $T_2$ $G_2$) समग्राणि. — $^{b}$) $K_1$ समरेप्सितान्; $B_5$ $D_{a1}$ $D_{1.5}$ मनसः प्रियान् (for मनसेप्सितान्). — $^{c}$) $Ś_2$ राजः (for रामः). — $^{d}$) $T_1$ बहुधा (for शिरसा). $V_1$ $B_5$ $D_{n1}$ $D_{2-4.6.7}$ भवं (for शिवम्).

156 $^{a}$) $T_2$ देवेश. — $^{b}$) $T_2$ सुमहातपाः. — $^{c}$) $B_3$ एव (for एतद्). — $^{d}$) $B_1$ पुरा; $T_3$ G M तथा (for तदा). $D_6$ तदाह भगवानृषिः.

157 $^{a}$) $K_3$ $B_{4.5}$ $D_{a1}$ $D_{n1}$ $D_{1.5}$ [अ]ददत्; $T_{1.3}$ G M ददौ. $V_1$ $B_1$ $D_{2-4.6.7}$ ददौ दिव्यं ($V_1$ °व्या); $B_2$ [अ]ददद्दिव्यं (for [अ]ददात्सर्वं). — $^{b}$) $V_1$ महास्त्राणि (for धनुर्वेदं). — $D_3$ om. $157^{c}$–$159^{a}$. — $^{c}$) $G_1$ $M_{2-4}$ पुरुषव्याघ्रः ($M_3$ °घ्रे).

वृजिनं हि भवेत्किंचिद्यदि कर्णस्य पार्थिव ।
नास्मै ह्यस्त्राणि दिव्यानि प्रादास्यद्भृगुनन्दनः ॥ १५८
नापि सूतकुले जातं कर्णं मन्ये कथंचन ।
देवपुत्रमहं मन्ये क्षत्रियाणां कुलोद्भवम् ॥ १५९
सकुण्डलं सकवचं दीर्घबाहुं महारथम् ।
कथमादित्यसदृशं मृगी व्याघ्रं जनिष्यति ॥ १६०
पश्य ह्यस्य भुजौ पीनौ नागराजकरोपमौ ।
वक्षः पश्य विशालं च सर्वशत्रुनिबर्हणम् ॥ १६१

इति श्रीमहाभारते कर्णपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

## २५

दुर्योधन उवाच ।
एवं स भगवान्देवः सर्वलोकपितामहः ।
सारथ्यमकरोत्तत्र यत्र रुद्रोऽभवद्रथी ॥ १
रथिनाभ्यधिको वीरः कर्तव्यो रथसारथिः ।

C. 8. 1621
B. 8. 35. 2
K. 8. 29. 2

158 D8 om. 158 (cf. v. l. 157). — a) K3 D8 M1 व्रजिनं. T3 G2.3 M2–4 न (for हि). T1 किं वा; M1 कश्चिद् (for किंचिद्). — b) T1.3 G M1.3 ह्यस्य (for यदि). B4 मारिष (for पार्थिव). — c) V1 D2.6 सोऽस्मै (for नास्मै). — d) Dn1 प्रादाच्चेद्; D6.8 ना(D8 प्र)-दास्यद्. — For 158cd, S (except T2) subst.:

293* सूतेन वर्धितो नित्यं न शूद्रो नृप एव सः ।
विशुद्धयोनिं विज्ञाय दिव्यान्यस्त्राण्यदात्प्रभुः ।

[(L. 1) G1 M2–4 विद्वा(G1 °द्व)न् (for नित्यं). G1 M न (M1 अ)सूतो (for न शूद्रो). T1 न सूतो नापि चाविद्वान्; G3 सूतो न विद्वान्वैश्यो न (for the prior half). — (L. 2) M ज्ञात्वा तु (for विज्ञाय). T1 G1.2 भृगुः (for प्रभुः).]

159 D8 om. 159a (cf. v. l. 157). — a) K1 सूतकुलं. — b) S (except T2) transp. कर्णं and मन्ये. — c) V1 D6 देवपुत्रसमं (for °महं). — After 159, K3 V1 B D S ins.:

294* विशिष्टमवबोधार्थं कुलस्येति मतिर्मम ।
सर्वथा न ह्ययं शल्य कर्णः सूतकुलोद्भवः ।

[(L. 1) K3 B1.4.5 D (except D8) T1.3 G M1.3 विसृष्टम्; Ca विशिष्टम् (as above). V1 अवबोधध्वं; B2 क्षत्रियाणां च; Da1 D1.5 T3 G1.3 Cc अविरो(T3 G1.3 °बो)धार्थं; Dn1 D8 m T2 महतो गो(T2 गा)त्राद्; D8 च महादेवाद्; T1 अपि पार्थस्य; G2 अपिबोधत्वं; M2–4 नावबोधार्थं (for अव°). Dn1 D8 T2 इति मे नैष्ठिकी मतिः (for the posterior half). — (L. 2) S (except T2) हि मे (for ह्ययं). B3 T1.3 G transp. शल्य and कर्णः. Dn1 सर्वथा न ह्यसंवल्य (for the prior half). Cc cites सर्वथा (as above). K3 कर्णं (for कर्णः). K3 सूतकुलोद्भवं.]

160 =(var.) 1.127.15. — b) G1 दिव्यबाहुम् (for दीर्घ°). V1 B1 D2 महाबलं; D6 °भुजं; T3 G1.3 अरिंदमं (for महारथम्). — c) K1 कर्णम्; T1 रथम् (for कथम्). V1 D4.6 S (except T2) आदित्यसंकाशं (for °सदृशं). — d) V1 D2.6 प्रसूयते (D2 °ति) (for जनिष्यति). S (except T2) मृगी (G2 °गः) सिंहं प्रसूयते. Ca as in text.

161 a) B1.2.4 D3.4.7 T3 G3 यथा (for पश्य). T1 पश्यस्यद्य. Ś K1.2.4 यस्य; V1 त्वस्य; G2 ह्यद्य (for ह्यस्य). K1 यत्तौ; D8 दिव्यौ; T3 G एतौ (for पीनौ). — c) Ś K4 D8 (marg. as in text) चक्षुः (for वक्षः). — d) Ś2 K4 सर्वशत्रुनिबर्हण; T1.3 G M सर्वशस्त्रसहं रणे; T2 ब्रुवतो मम सुप्रभो. — After 161, K3.4 V1 B D S ins.:

295* न त्वेष प्राकृतः कश्चित्कर्णो वैकर्तनो वृषः ।
महात्मा ह्येष राजेन्द्र रामशिष्यः प्रतापवान् ।

[(L. 1) Da1 D1.5 T G1.2 M1–3 त्वेवं; D6 त्वेव; G3 त्वयं; M4 त्वेहं (for त्वेष). Cc cites प्राकृतः (as above). B1.5 नृपः; Da1 D1.5 नृप; S वृषा.]

Colophon om. in D8. — *Adhy. name*: Ś K2.4 B2 त्रिपुरवधः; K1.3 V1 B1.4 Da1 Dn1 D1.3–5.7 त्रिपुरवधोपाख्यानं; T2 कर्णमाहात्म्यं; M1 कर्णमाहात्म्यकथनं. — *Adhy. no.* (figures, words or both): Ś2 24 (as in text); B1.2 Dn1 D3 34; B5 D4.5 35; Da1 45; D1 T1.3 G M 28; T2 30.

### 25

1 D8 om. 1ab with the ref. B5 om. the ref. — a) M1 भवेत् (for एवं). — b) T3 G ब्रह्मा (for सर्व-). — c) B3 ब्रह्मा (for तत्र). — d) K2 B1.3.4 D3.4.7 ब्रह्मा (for यत्र). K3 भवेद् (for ऽभवद्). S (except T1) रथे (for रथी).

2 a) V1 B D T2.3 G रथिनोभ्य(Da1 D1.5 G2 °नो

C. 8. 1621
B. 8. 35. 2
K. 8. 29. 2

तस्मात्त्वं पुरुषव्याघ्र नियच्छ तुरगान्युधि ॥ २

संजय उवाच ।

ततः शल्यः परिष्वज्य सुतं ते वाक्यमब्रवीत् ।
दुर्योधनममित्रघ्नः प्रीतो मद्राधिपस्तदा ॥ ३
एवं चेन्मन्यसे राजन्गान्धारे प्रियदर्शन ।
तस्मात्ते यत्प्रियं किंचित्तत्सर्वं करवाण्यहम् ॥ ४
यत्रास्मि भरतश्रेष्ठ योग्यः कर्मणि कर्हिचित् ।
तत्र सर्वात्मना युक्तो वक्ष्ये कार्यधुरं तव ॥ ५
यत्तु कर्णमहं ब्रूयां हितकामः प्रियाप्रियम् ।
मम तत्क्षमतां सर्वं भवान्कर्णश्च सर्वशः ॥ ६

कर्ण उवाच ।

ईशानस्य यथा ब्रह्मा यथा पार्थस्य केशवः ।
तथा नित्यं हिते युक्तो मद्रराज भजस्व नः ॥ ७

शल्य उवाच ।

आत्मनिन्दात्मपूजा च परनिन्दा परस्तवः ।
अनाचरितमार्याणां वृत्तमेतच्चतुर्विधम् ॥ ८
यत्तु विद्वन्प्रवक्ष्यामि प्रत्ययार्थमहं तव ।
आत्मनः स्तवसंयुक्तं तन्निबोध यथातथम् ॥ ९
अहं शक्रस्य सारथ्ये योग्यो मातलिवत्प्रभो ।
अप्रमादप्रयोगाच्च ज्ञानविद्याचिकित्सितैः ॥ १०

---

ह्य)धिको; T1 रथिनां ह्यधिको. Ś1 K3.4 V1 B Dn1 D2–4.6.7 M2–4 वीर; K1 वीरं; T2 वात्र (for वीरः). — b) K1 कर्तव्यं; T2 तुल्यो वा (for कर्तव्यो). — V1 B1.5 Dn1 D6 T2 om. 2cd. B2 reads 2cd after line 4 of App. I (No. 5). Da1 D1.5 repeat 2cd at the end of App. I (No. 5). After 2, K4 V1 B D T2 ins. a passage given in App. I (No. 5).

3 K1.3 D6 T1 om. the ref. T2 reads 3–6 for the first time after line 57 of App. I (No. 5). — ab) K1 कथम् (for वाक्यम्). V1 D6 स शल्यः प्रांजलिर्भूत्वा परिष्वज्य च पार्थिवं. — c) K3 V1 B D S अमित्रघ्नं (Da1 D1.5 °घ्न). — d) D4 T1 तथा (for तदा). V1 D6 मद्राधिपतिरब्रवीत्.

4 Before 4, N (except D6) ins. शल्य उवाच. — a) B2 D6 यन् (for चेन्). Ś K2 उच्यसे; K1 वक्षिम ते (sic); K4 उच्यते (for मन्यसे). — b) Ś K2 G3 प्रियदर्शनः. — c) V1 D6 एष (for तस्मात्). — d) G2 प्रियं (for सर्वं). B2 करवाणि वै (for °वाण्यहम्).

5 a) K3 D6 यत्रास्मिन्; B5 तत्रास्मि; T2 तत्तोस्मि; T3 G1.3 तस्मिंस्तु (for यत्रास्मि). Da1 D1.5 भारतश्रेष्ठ. — b) B1.3.4 D6 योग्य- (for योग्यः). Da1 D1.5 M4 कर्माणि (for कर्मणि). K1 कर्हचित् (for कर्हि°). — c) T2 तथा (for तत्र). D1.5 M1 सर्वात्मनो (for °त्मना). — d) K 3 वक्षे; B5 रक्ष्ये; T1 रक्षे; G2 यक्ष्ये; Ca. c वक्ष्ये (as in text). B5 Da1 D1.2.5.6.8 G2 कार्यं धुरं (D6 ध्रुवं); T2 कार्यांतरं (for कार्यधुरं). K2 वक्ष्ये कार्यधुरंधर; V1 बाह्ये कार्यं वरं वरं; V1m वक्ष्ये कार्यस्य संभवः; B1–3 Dn1 D3.4.7 M1 वक्ष्ये कार्यं परंतप. — After 5, V1 reads (on marg.) 7cd, repeating it in its proper place.

6 a) T1.2 G2 M2–4 यत्तत्; T3 G1.3 यद्यत्; M1 यत् (submetric) (for यत्तु). B1 कर्मम् (for कर्णम्). K1 D1 ब्रूया. D6 यत्तु ब्रूयामहं कर्मा. — b) K3 G3 हितकाम-; D1 हितः काम-; T2 हितं कामं. K4 V1 B (except B3.5) Dn1 D3.4.7 प्रियाप्रिये (K4 °यौ); T3 G2.3 प्रियंवदं (G2 °द). — c) K3 मे स (for मम). Dn1 D3 तु (for तत्). Ś2 K4 B5 Da1 D1.4.5 T3 G3 क्षम्यतां; T1 क्रमतां (for क्षमतां). — d) B1 कर्णस्य (for कर्णश्च). D3 सर्वथा; Cc सर्वशः (as in text). — After 6, B2 repeats lines 2–4 of 292* followed by 8. 24. 151–8. 25. 2.

7 V1 reads 7cd for the first time after 5. — c) K1 युक्ते; Cc युक्तो (as in text). — d) K1 मद्रराजा; M4 भद्रराज (for मद्र°). V1 B D T1.3 G1.3 M भवस्व; T2 भरस्व; G2 भवास्व (for भजस्व). B5 Da1 D1.5 S (except T2) मे (for नः).

8 T1 om. the ref. — a) K1.3 B1 G1.2 आत्मनिंदा च (G1 °दाश्च) पूजा च (G2 °जाश्च). — b) Ś2 K4 परस्तुतिः; B1 °स्तप; T1 M1 °स्तव; T2 °स्तवं; T3 G3 [आ]त्मनः स्तवः. Ca cites स्तवः. — d) V1 एव (for एतत्). V1 Dn1 D6 S चतुष्टयं (for °र्विधम्).

9 Before 9, T1 ins. शल्यः. — a) V1 D2 यत्ते; B2 बहु; B3 वरं; Da1 D1.5 यस्तु; Dn1 यं तु (for यत्तु). K3 यत्तु विद्वन्नविष्यामि; T2 चतुर्विधं प्रवक्ष्यामि. — b) T2.3 G1.3 इदं (for अहं). B1 (marg. as in text) पुनः (for तव). B3 प्रयत्नाच्च महत्तरं. — c) K4 आत्मानं; M4 आत्मानः. T2 स्तवयुक्तं तं. — d) T2 निबोधय (for तन्निबोध).

10 b) K2 योगो (for योग्यो). D6 प्रभोः. — c) Ś K1.2.4 अप्रयासप्रयोगाच्च (Ś2 K1 °गश्च; K4 °गाश्च);

ततः पार्थेन संग्रामे युध्यमानस्य तेऽनघ ।
वाहयिष्यामि तुरगान्विज्वरो भव सूतज ॥ ११

इति श्रीमहाभारते कर्णपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

# २६

दुर्योधन उवाच ।

अयं ते कर्ण सारथ्यं मद्रराजः करिष्यति ।
कृष्णादभ्यधिको यन्ता देवेन्द्रस्येव मातलिः ॥ १
यथा हरिहयैर्युक्तं संगृह्णाति स मातलिः ।
शल्यस्तव तथाद्यायं संयन्ता रथवाजिनाम् ॥ २
योधे त्वयि रथस्थे च मद्रराजे च सारथौ ।
रथश्रेष्ठो ध्रुवं संख्ये पार्थो नाभिभविष्यति ॥ ३

संजय उवाच ।

ततो दुर्योधनो भूयो मद्रराजं तरस्विनम् ।
उवाच राजन्संग्रामे संयच्छन्तं हयोत्तमान् ॥ ४
त्वयाभिगुप्तो राधेयो विजेष्यति धनंजयम् ।
इत्युक्तो रथमास्थाय तथेति प्राह भारत ॥ ५
शल्येऽभ्युपगते कर्णः सारथिं सुमनोऽब्रवीत् ।
त्वं सूत स्यन्दनं मह्यं कल्पयेत्यसकृत्त्वरन् ॥ ६

C. 8. 1676
B. 8. 36. 7
K. 8. 30. 7

---

B2 अप्रमत्तप्र°; D2.3 T1.3 G अप्रमादात्प्र°. Ca.c cite अप्रमादः, and प्रयोगः. — d) K1 V1 ज्ञानविद्याचिकित्सनैः.

11 a) K3 Dn1 D3 S तस्मात्; D6 तथा (for ततः). D6 G2 पार्थस्य (for पार्थेन). D1 ततः प्रार्थितसंग्रामे. — c) M4 वहयिष्यामि (for वाह°). G3 वाहयिष्ये रथवरं. — d) त्वं धीरो; M1 निर्ज्वरो (for विज्वरो). Dn1 M1 सूतजः.

Colophon om. in S (except T2). — *Day of Karṇa's Generalship:* Ś2 द्वितीययुद्धदिवसे; K4 प्रथमः. — *Adhy. name:* Dn1 शल्यसारथ्यं; T2 शल्यसारथ्याभ्युपगमः. — *Adhy. no.* (figures, words or both): Ś2 25 (as in text); B1 D3.5 35; B2 65; Da1 46; D1 29; D4.6 36; T2 31.

## 26

1 c) D1.3 अप्यधिको (for अभ्य°). T1 [ऽ]यं वा; T2 यत्नाद् (for यन्ता). — K3 om. $1^{d}$–$3^{c}$. — d) K1 V1 B D T2 देवेशस्य; T1.3 G M वासवस्य (for देवेन्द्रस्य). D2 च (for [इ]व). G2 सारथिः (for मातलिः).

2 K3 om. 2 (cf. v. l. 1). D3 G2 om. (hapl.) $2^{ab}$. — b) B1 च (for स). T1 G1.2 M रथं (M1 तथा) गृह्णाति मातलिः; T2 संगृह्णातीह मातलिः. — c) V1 B D S transp. तव and तथा. — d) D3 स यंता (for संयन्ता). K1 रथवाजिनं; Dn1 °सारथिः; T1 °मुत्तमं (for °वाजिनाम्).

3 K3 om. $3^{abc}$ (cf. v. l. 1). — a) D3 योधयित्वा; G2 M2–4 यौधे त्वयि. V1 Ca बलस्थे (for रथस्थे). Da1 वा (for च). T1 योधे त्वधिरथस्थे च. — b) T1.3 G M1 महारथे (M1 °थ); M2–4 च यंतरि (for च सारथौ). — c) K2 Dn1 रथश्रेष्ठौ; T3 G1.3 °श्रेष्ठं (for °श्रेष्ठो). ❀ Cc: अथ श्रेष्ठ इति वा पाठः । ❀ V1 (marg. as in text) लेख्ये; M1 संखौ; M2–4 संखे (for संख्ये). — d) K3 B1.3–5 Da1 D1–3.5–7 पार्थानभिभविष्यति; V1 पार्थो वै न भविष्यति; B2 Dn1 D4.8 T2 कृष्णावभिभविष्यति (Dn1 °थ; T2 °थः); M1 पार्थोपि * भविष्यति; M2–4 पार्थं ह्यभिभविष्यति. Cc cites अभिभविष्यति (as in text).

4 K3 om. (hapl.) $4^{b}$–$5^{a}$. — b) Dn1 T1.2 यशस्विनं (for तर°). — After $4^{abc}$, Ś1 K4 V1 B D S ins.:

296* ऽभ्युषिते पर्युपस्थिते ।
कर्णस्य यच्छ संग्रामे

[Ś1 om. line 1. — (L. 1) B3–5 Da1 Dn1 D1.5 व्युषिते; D2 युधि ते; D6 मयि ते; T2 [ऽ]त्युषिते (for ऽभ्युषिते). T1.3 G M प्रश्रि(G2 °ती)तो मधुरं वचः. — (L. 2) T2 यच्च (for यच्छ).]

— d) K1 V1 B D S मद्रराज (G2 °जन्) (for संयच्छन्तं). D3 सुरोत्तमान् (for हयो°). D3 (marg. *sec. m.*) मद्रेश तुरगोत्तमान्.

5 K3 om. $5^{a}$ (cf. v. l. 4). — a) K1 [अ]तिगुप्तो; D3 [अ]भियुक्तो; G3 (before corr.) हि गुप्तो (for [अ]भि°). — b) T1 विशेष्यति (for विजे°). — c) K3 इत्युक्त्वा (for °क्तो). Dn1 D3 T2 आस्थातुं (for आस्थाय).

6 T3 om. $6^{ab}$. — a) M1 शल्यो (for शल्ये). K1.2 M1 [ऽ]त्युपगते; K3 [ऽ]भ्युपा° (for [ऽ]भ्युप°). T1 G2 शल्याभ्युपगमे कर्णः. — b) D3 सारथ्यं (for सारथिं). K3 V1 B D Cc सुमना (for सुमनो). S सारथ्याय तं(M1 कु)तो ब्रवीत्. — c) Ś1 K3 B D त्वं सूत; V1 S स्व-

C. 8. 1676
B. 8. 36. 7
K. 8. 30. 8

ततो जैत्रं रथवरं गन्धर्वनगरोपमम् ।
विधिवत्कल्पितं भर्त्रे जयेत्युक्त्वा न्यवेदयत् ॥ ७
तं रथं रथिनां श्रेष्ठः कर्णोऽभ्यर्च्य यथाविधि ।
संपादितं ब्रह्मविदा पूर्वमेव पुरोधसा ॥ ८
कृत्वा प्रदक्षिणं यत्नादुपस्थाय च भास्करम् ।
समीपस्थं मद्रराजं समारोपयदग्रतः ॥ ९
ततः कर्णस्य दुर्धर्षं स्यन्दनप्रवरं महत् ।
आरुरोह महातेजाः शल्यः सिंह इवाचलम् ॥ १०
ततः शल्यास्थितं राजन्कर्णः स्वरथमुत्तमम् ।
अध्यतिष्ठद्यथाम्भोदं विद्युत्वन्तं दिवाकरः ॥ ११

तावेकरथमारूढावादित्याग्निसमत्विषौ ।
व्यभ्राजेतां यथा मेघं सूर्याग्नी सहितौ दिवि ॥ १२
संस्तूयमानौ तौ वीरौ तदास्तां द्युतिमत्तरौ ।
ऋत्विक्सदस्यैरिन्द्राग्नी हूयमानाविवाध्वरे ॥ १३
स शल्यसंगृहीताश्वे रथे कर्णः स्थितोऽभवत् ।
धनुर्विस्फारयन्घोरं परिवेषीव भास्करः ॥ १४
आस्थितः स रथश्रेष्ठं कर्णः शरगभस्तिमान् ।
प्रबभौ पुरुषव्याघ्रो मन्दरस्थ इवांशुमान् ॥ १५
तं रथस्थं महावीरं यान्तं चामिततेजसम् ।
दुर्योधनः स्म राधेयमिदं वचनमब्रवीत् ॥ १६

---

(V1 T2 M3.4 स्वं; G2 सु)सूतं (for स्वं सूत). — d) K3 त्वरः (for त्वरन्). K4 कल्पयाद्य सकृत्त्वरन्; D2 कल्पये त्वं सरत्वरं (sic); T1 कल्पये तं सकृत्त्वरन्.

7 a) Ś2 जैतुं (sic) (for जैत्रं). — c) K4 G1 M1 भद्रे; V1 B D (except Dn1 D6) M3.4 भद्रं (D5.8 M3.4 °द्र); T2 सर्वै (for भर्त्रे). — d) K1 T2 न्यवेदयन्.

8 a) Ś2 रथिनं (for रथिनां). K3.4 श्रेष्ठ; V1 Da1 D1.2.5 T2 श्रेष्ठं (for श्रेष्ठः). — b) B2 [ऽ]भ्येत्य (for ऽभ्यर्च्य). — c) Ś K1.2.4 संपादितो; T2 संस्कारितं; Cc संपादितं (as in text).

9 a) T1 यत्तो (for यत्नाद्). — b) T1 ह्युपस्थाय. D8 भास्करिः. — c) Ś2 मद्रराज; S (except T2) °पतिं (for °राजं). — d) D6 अग्रजः (for अग्रतः). V1 B D3.4.7 आरोह त्व(V1 °हितु)मथाब्रवीत्; Da1 D1.5 आरोहेति तमब्रवीत्; S (except T2) समारोहेत्यथाब्रवीत्.

10 a) K3 दुर्योधः; K4 Dn1 T2 G2 दुर्धर्षः; G1 M1 दुर्धर्ष. — b) K4 D6 G2 स्यन्दनं. — c) Ś2 महातेजः. — K1 om. 10d. — d) T2 शल्यः सिंहा यथाचलं.

11 a) Ś2 K4 D5.8 शल्यस्थितं; V1 B (except B5) D3.4.7 शल्याश्रितं; Dn1 D6 शल्ये स्थिते; D1 T1.2 G1.2 शल्यं स्थितं; D2 शल्योस्थितो; Cc शल्यास्थितं (as in text). B Da1 D1.3–5.7 दृष्ट्वा (for राजन्). K3 तत कृत्वा स्थितं राजन् (sic). — b) B D3 स्वं रथम्; G2 स रथम् (for स्व°). — c) Ś1 K2.4 V1 B5 Dn1 D3 M3 अभ्य-(K4 °ल्य)तिष्ठद् (for अध्य°). D3 (marg. as in text) यथांभोधि (for °म्भोदं). Ś2 अभितिष्ठ यथांभोदां (sic). — d) Ś2 K1 Da1 D1.5 T2 G M2–4 विद्युद्वंतं; K3 विधूतं च; B1 T1 विद्युतं तं (for विद्युत्वन्तं). K1.3 G1 दिवाकरं (for °करः).

12 K1 damaged. — b) D2 -समत्विषैः; S (except T2) °द्युती (T3 G3 °तिं). — c) V1 D2–4.7 अभ्राजेतां (for व्यभ्रा°). K4 मेघौ; T1 G1 M1.3.4 मेघे; T3 संख्ये; G2 संखे; G3 संघे (for मेघं). — d) T1 सहितौ चंद्रभास्करौ. Ca as in text.

13 b) Ś2 द्युतिमत्तरा; V1 उग्रवत्तरौ; B2 T1 द्युतिसत्तमौ; B3.5 D3.4.7 °मत्तमौ (for °मत्तरौ). — c) D2.8 T2 रि(D8 रु)त्विक्सदस्यैर्; M2 ऋत्युक्सदस्यैर् (for ऋत्विक्स°). Cc cites ऋत्विजः and सदस्याः. V1 ऐंद्राग्नी; T1 इंद्राग्नि. — d) Ś2 K3 V1 B (except B5) D S स्तूयमानौ (for हूय°).

14 a) D8 -संग्रहीताश्वे. — b) B1.2 Dn1 D2.3.6 T3 G M बभौ (for ऽभवत्). V1 रथे कर्ण स्थितौ बभौ; T1 रथे तिष्ठन्महाबलः. — c) K1 घोषं (for घोरं). — d) Ś2 K1.2.4 B1.3.5 D3.7 परिवेशीव; G1 परीवेषीव (for परि°). Cc cites परिवेषी (as in text).

15 a) D5.8 T1 आश्रितः; M3 आस्थिते (for आस्थितः). D1.5 स रथः श्रेष्ठं; G2 सुरथश्रेष्ठं. — b) Da1 D1 शरगभस्थिमान्; T1 चरगभस्तिमान्; T2 शत°. — V1 om. (hapl.) 15cd. — c) K3 प्रबलो (for प्रबभौ). M2 पुरुषव्याघ्र.

16 a) S (except T2) प्रयांतं (for रथस्थं). K1 महात्मानं; K3 V1 B D S °बाहुं (Dn1 °हो) (for °वीरं). — b) Ś lacuna for यान्तं चा-. K3 V1 B2.4.5 D S युद्धाय (for यान्तं च). D3 [अ]मिततेजसा. B3 योद्धारमतिविक्रमं. — c) K3 च; V1 B1.3–5 D T2 तु; B2 स; T1.3 G M [अ]थ (for स्म). — After 16, S (except T2) ins. an addl. colophon. [*Adhy. name:* T1 M1 शल्यरथारोहणं; G1 शल्यसारथिरोहणं. — *Adhy. no.* (figures, words or both): S (except T2) 29.]

अकृतं द्रोणभीष्माभ्यां दुष्करं कर्म संयुगे ।
कुरुष्वाधिरथे वीर मिषतां सर्वधन्विनाम् ॥ १७
मनोगतं मम ह्यासीद्भीष्मद्रोणौ महारथौ ।
अर्जुनं भीमसेनं च निहन्ताराविति ध्रुवम् ॥ १८
ताभ्यां यदकृतं वीर वीरकर्म महामृधे ।
तत्कर्म कुरु राधेय वज्रपाणिरिवापरः ॥ १९
गृहाण धर्मराजं वा जहि वा त्वं धनंजयम् ।
भीमसेनं च राधेय माद्रीपुत्रौ यमावपि ॥ २०
जयश्च तेऽस्तु भद्रं च प्रयाहि पुरुषर्षभ ।
पाण्डुपुत्रस्य सैन्यानि कुरु सर्वाणि भस्मसात् ॥ २१
ततस्तूर्यसहस्राणि भेरीणामयुतानि च ।
वाद्यमानान्यरोचन्त मेघशब्दा यथा दिवि ॥ २२
प्रतिगृह्य तु तद्वाक्यं रथस्थो रथसत्तमः ।
अभ्यभाषत राधेयः शल्यं युद्धविशारदम् ॥ २३
चोदयाश्वान्महाबाहो यावद्धन्मि धनंजयम् ।
भीमसेनं यमौ चोभौ राजानं च युधिष्ठिरम् ॥ २४
अद्य पश्यतु मे शल्य बाहुवीर्यं धनंजयः ।
अस्यतः कङ्कपत्राणां सहस्राणि शतानि च ॥ २५
अद्य क्षेप्स्याम्यहं शल्य शरान्परमतेजनान् ।
पाण्डवानां विनाशाय दुर्योधनजयाय च ॥ २६

शल्य उवाच ।

सूतपुत्र कथं नु त्वं पाण्डवानवमन्यसे ।

C. 8. 1697
B. 8. 36. 27
K. 8. 30. 28

---

17 Before 17, S (except $T_2$) ins. दुर्योधनः. — $^a$) $K_3$ $D_4$ यत्कृतं (for अकृतं). $V_1$ भीष्मद्रोणाभ्यां. — $^b$) $D_6$ दुष्कृतं (for दुष्करं). S (except $T_2$) आहवे कर्म दुष्करं. — $^c$) T G [अ]तिरथे ($G_2$ °थो) (for [आ]धि°).

18 $^a$) $K_3$ महदासीद्; $K_4$ $M_{2-4}$ ममाद्यासीद्. — $^c$) $Da_1$ $D_{1.5}$ वा (for च). — $^d$) $K_3$ नियंताराव्; $G_1$ न हंताराव् (for निह°). $Da_1$ $D_{1.5}$ प्रभो (for ध्रुवम्).

19 $^a$) $B_1$ आभ्यां (for ताभ्यां). $K_4$ यद्यत्कृतं; $G_2$ यंत्तत्कृतं (for यदकृतं). — $G_2$ om. $19^b$–$21^a$. — $^b$) $D_8$ धीरकर्म; $T_1$ क्रूरं कर्म; $T_2$ कुरु कर्म; $T_3$ $G_{1.3}$ कर्म कर्ण (for वीरकर्म). $V_1$ $B_{1.4}$ $Dn_1$ $D_{2,6}$ S महाहवे (for °मृधे). — $^c$) $V_1$ $G_1$ तत्कुरुष्वाद्य ($G_1$ °ष्व च) राधेय. — $Ś_1$ $K_{1.2}$ om. (hapl.) $19^d$–$20^c$. — $^d$) $D_2$ इवारिषु (for °परः).

20 $G_2$ om. 20 (cf. v. l. 19). Ś $K_{1.2}$ om. $20^{abc}$ (cf. v. l. 19). — $^a$) $T_1$ च (for वा). — $^b$) $Dn_1$ त्वं वा (by transp.); $D_6$ त्वं वै; $T_{1.3}$ $G_{1.3}$ पार्थं. — $^c$) $V_1$ $D_{2.6}$ S (except $T_2$; $G_2$ om.) कौंतेयं ($D_2$ $M_2$ °य); $Dn_1$ राधेयं.

21 $G_2$ om. $21^a$ (cf. v. l. 19). — $^a$) $V_1$ $B_5$ $D_{2.8}$ तु (for च). $D_6$ सुरेंद्रं (for ऽस्तु भद्रं). $V_1$ B D (except $Dn_1$) S (except $T_2$; $G_2$ om.) ते (for च). — $^b$) $K_4$ पुरुषर्षभः; $D_6$ नरवर्षभ; S (except $T_2$) त्वं नरर्षभ (for पुरुष°). — $^{cd}$) S (except $T_2$) पांडवेयानि (for पाण्डुपुत्रस्य). $T_3$ G transp. सैन्यानि and सर्वाणि.

22 $^b$) $V_1$ अयुधानि (for °तानि). — $^c$) $T_1$ वार्यमाणानि. $T_{1.3}$ G M [अ]शोभंत (for [अ]रोचन्त). — $^d$) $K_{1.3}$ $V_1$ B (except $B_5$) $Dn_1$ $D_{2-4.6.7}$ M मेघशब्दो (for °शब्दा). $T_1$ यथा भुवि; $M_1$ यथाध्वनि.

23 $^a$) $V_1$ $D_6$ प्रगृह्य स (for प्रतिगृह्य). — $^b$) $B_2$ $D_8$ रथिसत्तमः ($D_8$ °म). — $^d$) $B_2$ शैल्यं (for शल्यं). $K_3$ $B_2$ $T_3$ G $M_1$ युद्धविशारदः.

24 $^a$) $Da_1$ $D_{1.5}$ वाहय; $D_{6.8}$ नोदय (for चोदय). $K_4$ [अ]स्वान्; $B_3$ [अ]स्सान्. S (except $T_2$) महेष्वास (for महाबाहो). — $^b$) $K_{1.2}$ $G_2$ यावद्धर्मिं; $T_1$ °द्धन्नि; $G_1$ °द्धन्वी (for °द्धन्मि). — $^c$) $Ś_2$ भीमसेनो; $K_1$ $Dn_1$ $M_1$ °सेन-; $V_1$ °सेनौ (for °सेनं). $D_8$ तथा; $T_1$ यमं (for यमौ). $D_6$ चैव (for चोभौ).

25 $^a$) $K_1$ अत्र (for अद्य). $D_6$ पश्यंतु. — $^b$) $K_3$ $T_1$ $G_2$ धनंजये ($K_3$ °य); $D_{2.6}$ परे जनाः. — $^c$) $B_3$ पश्यतः; $D_1$ अस्यतं. $B_4$ कंकपत्राणि (for °पत्राणां).

26 $^a$) $K_4$ प्रेष्यामि; $D_5$ क्ष्येस्यामि (sic); $D_8$ क्षेप्सामि; $T_1$ जेष्यामि; $T_2$ क्षिपामि; $T_3$ क्षेत्यामि (sic) (for क्षेप्स्यामि). $V_1$ $D_{2.6}$ शत्रौ; $G_1$ शल्यं. — After $26^a$, $T_1$ ins.:

297* पाण्डवान्सजनार्दनान् ।
संयोक्ष्यामि रणे शल्य

— $^b$) $V_1$ $D_2$ परमतेजसान्; $B_{1.2}$ $Dn_1$ °तेजसः; $D_8$ °तापनान्. $K_8$ स शल्यामिततेजसा. — $^c$) $Dn_1$ पंचालानां (for पाण्डवानां). M विनाशार्थं (for °शाय). — $^d$) $D_8$ दुर्योधनहिताय च; $T_2$ अस्माकं विजयाय च. — After 26, S ins.:

298* संजय उवाच ।
एतच्छ्रुत्वा वचस्तस्य शल्यः कर्णं वचोऽब्रवीत् ।
[$T_2$ om. the ref.]

27 S om. the ref. — $^a$) $K_3$ सूर्यपुत्र (for सूत°). $K_3$ $Dn_1$ तु; $T_2$ भो (for नु). $T_{1.3}$ G M कथं नु

